Gadadhar Tarkalankar Bhattacharya

Hetwabhas savyubhicharah

হেত্বাভাস সব্যভিচার:

Sanskrit

Paper – Printed

1944 Sambat (13? years old)

44 Folio

11.4" X 6"

Complete



# हेत्वाभास सव्यभिचारः.



## तत्त्व चिंतामणि, शिरोमणि सहिता गादाधरी.

श्रीमन्महाराजाधिराज गोस्वामी तिलक श्री १०८ श्रीगोवर्द्धनलालजी महाराज द्वारा
मैथिल पंडित गंगाधर विरचित "गोवर्द्धन चरण कल्प मंजरी" नामक टिप्पणी भूषिता.

स्वीय सुदर्शन यंत्रालये मुद्रिता  कविवर रविजी शर्मणा संशोध्य प्रकाशिता.



श्रीगणेशायनमः ॥ अथ चिंतामणिः ॥ सव्यभिचारोऽपि त्रिविधः साधारणासाधरणानुपसंहारिभेदात् तत्र सव्यभिचारः साध्यतदभावप्रसंजक इति न त्रितयसाधारणं लक्षणम् एकस्योभयं प्रत्यंसाधकत्वात् अनापादकत्वाच्च नाप्युभयपक्षवृत्तित्वं उभयव्यावृत्तम् वा तत्त्वम् अननुगमात् । अथ साध्यसंशयजनककोटिद्वयोपस्थापकपक्षधर्मताज्ञानविषयत्वे सति हेत्वभिमतः सः, विप्रतिपत्तिस्तु प्रत्येकं न तथा न वा पक्षवृत्तिः, साधारणमन्वयेन असाधारणं व्यतिरेकेण अनुपसंहारी पक्षएवोभयसाहचर्येण कोटिद्वयोपस्थापकः। केवलान्वयिसाध्यकानुपसंहारी अयं घट एतत्त्वादित्यसाधारणश्च सद्धेतुरेव तदज्ञानं दोषः पुरुषस्य । अतएवासाधारणप्रकरणसमयोरनित्यदोषत्वम् अन्यथा सद्धेतौ वाधादिज्ञाने हेत्वाभासाधिक्यापत्तिः। नच प्रमेयत्वेनाभेदानुमाने शब्दोऽनित्यः शब्दाकाशान्यतरत्वादित्यत्र च साधारणेऽव्याप्तिः तयोः साध्यवदवृत्तित्वेन विरुद्धत्वादिति चेन्न एतदज्ञानेऽपि साधारण्यादिप्रत्येकस्य ज्ञानादुद्भावनाच्च स्वपरानुमितिप्रतिबन्धात् उद्भावितैतन्निर्वाहार्थं साधारणादेरवश्योद्भाव्यत्वेन तस्यैव दोषत्वाच्च । एतेन पक्षवृत्तित्वे सत्यनुमितिविरोधिसंबंधाव्यावृत्तिरनैकांतिकः सपक्षविपक्षवृत्तित्वमुभयव्यावृत्तत्वमनुपसंहारित्वं चानुमितिवि-

०८ साद० णं। साद० णत्वे तुः। अन्वयेन। साहचर्येण। असाधारणेत्वे तुः। असाधारणहेतुः। व्यतिरेकेण। व्याप्तं नत्तेन। पक्ष एव। पक्षान्त भवि वैव। कोटिद्वयोपस्थापक इति। लिनयत्र ज्ञानगं। तदर्थस्तु। कोटिद्वयोपस्थिते जनक ज्ञान विषयेत्वर्थः।

० सद्धेतुत्वाज्ञानितत्यर्थः

असाधार ० व्या सत्प्रति पक्षयोः ६ ६ ण

० उपाधेयसंकरेऽपि

रोधि, तत्सम्बन्धः प्रत्येकमस्ति विरुद्धोऽप्यनेन रूपेण सव्यभिचारएव उपाधेश्च न संकरइति वक्ष्यतइतिनिरस्तम् एतदज्ञाने ज्ञानेऽपि वाऽवश्यकप्रत्येकज्ञानस्य दोषत्वात् असाधकतानुमितौ व्यर्थविशेषणत्वाच्च अतएव साध्याव्याप्यत्वे सति साध्याभावाव्याप्यहेत्वाभासत्वं साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वं वेति परास्तं व्यर्थविशेषणत्वात् प्रथमं हेत्वाभासत्वाज्ञानाच्च गगनमनित्यं शब्दाश्रयत्वादित्यादिबाधविरुद्धसंकीर्णासाधारणाव्याप्तिरिति कश्चित् नापि सपक्षविपक्षगतसर्वसपक्षविपक्षव्यावृत्तान्यतरत्वं व्यर्थविशेषणत्वात् अनुपसंहार्य्यव्याप्तेश्च। किंच पंक्षातिरिक्तसाध्यवतः सपक्षत्वे प्रमेयत्वेनाभेदसाधनेऽनुपसंहार्य्येऽव्याप्तिः पक्षातिरिक्तसाध्यवतोऽप्रसिद्धेः साध्यवतः सपक्षत्वे विवक्षितेऽप्रसिद्धिः वृत्तिमतोधर्मस्य साध्यवद्विपक्षान्यतरवृत्तित्वनियमात् । नापि पक्षातिरिक्तसाध्यवन्मात्रवृत्त्यन्यत्वे सति पक्षातिरिक्तसाध्याभाववन्मात्रवृत्तिभिन्नत्वम् अनुपसंहार्य्यव्याप्तेः धूमादावतिव्याप्तेश्च तस्य पक्षे साध्यवति वृत्तः नापि पक्षवृत्तित्वे विरुद्धान्यत्वे च सत्यनुमित्यौपयिकसंबंधशून्यत्वं व्यर्थविशेषणत्वात् एतेनानुगतं सर्व्वमेव लक्षणप्रत्युक्तं प्रत्येकमेव दूषणत्वात् उद्भावने वादिनिवृत्तेश्च । उच्यते । उभयकोट्युपस्थापकता-

वच्छेदकरूपवत्त्वं तत्वं तत्र साधारणत्वादिविरुधान्यपक्षवृत्तित्वे सत्यनुमितिविरोधिसंबंधाव्यावृत्ति-र्वा तेनैव रूपेण ज्ञातस्य प्रतिबंधकत्वात् परस्य तथैवोद्भावनाच्च लक्षणानुरोधेन प्रत्येकमेव हे-त्वाभासत्वम् । यद्वा साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वं तेनासाधारणस्य साध्यतदभावोपस्थापकतया दूषकत्वपक्षे नाव्याप्तिः नचैवमाधिक्ये विभागव्याघातः स्वरूपस-तानुगतरूपेण त्रयाणामेकीकृत्य महर्षिणा विभागकरणात् नचैवं साध्याभावज्ञापकत्वेन बाधप्र-करणसमयोस्तदज्ञापकतयान्येषामुपसंग्रहः कुतोनकृत इति वाच्यं स्वतन्त्रेच्छस्य नियोगपर्य्य-नुयोगानर्हत्वात् । तत्र साधारणत्वं न साध्याभाववद्गामित्वं सर्व्वमनित्यं मेयत्वादित्यनुपसंहार्य्ये भूर्नित्या गन्धवत्वादित्यसाधारणे संयोगादिसाध्यकद्रव्यत्वे चातिव्याप्तेः अतएव न साध्यवत्त-दन्यवृत्तित्वं नापि निश्चितसाध्यवत्तदन्यवृत्तित्वं साध्यवदन्यवृत्तित्वस्य दूषकत्वेन शेषवैयर्थ्यात् अतएवामुकेनायमनैकान्तिक इत्येवोद्भाव्यते ततएव वादिनिवृत्तेश्च नतु सपक्षगतत्वमपि । अनु-पसंहार्य्यो व्यावर्त्यो ऽन्यथा तस्यैतद्विशेषत्वापत्तिरिति चेत् त्यज तर्हि तमधिकं क्लृप्तेऽन्तर्भावात्। नापि सपक्षविपक्षगतत्वं व्यर्थविशेषणत्वात् । विरुद्धो व्यावर्त्य इति चेन्न विपक्षगामित्वस्यैव दूष-

कत्वे तस्याप्येतदन्तर्भावात् । अथ पक्षान्यसाध्यवत्तदन्यवृत्तित्वं साधारणत्वं तेन सर्वमनित्यं मेयत्वादित्यनुपसंहार्य्ये नातिप्रसंगः नच व्यर्थविशेषणता घटोऽनित्यो घटाकाशोभयवृत्तिद्वित्वाश्रयत्वादित्यनुपसंहार्य्यस्य विरुद्धस्यानैकांतिकभिन्नस्य व्यवच्छेद्यत्वादिति चेन्न दूषकताप्रयोजकरुपभेदमंतरेण भेदस्यैवानुपपत्तेः। साध्यवद्वृत्तित्वे सति सर्वसाध्यवदन्यवृत्तित्वमित्यपि नव्यर्थविशेषणत्वात् एकव्यक्तिकसाध्ये तदभावाच्च एतेन हेत्वाभासान्तरव्यवच्छेदकं लक्षणान्तरेऽपि विशेषणं व्यर्थमिति। उच्यते विपक्षवृत्तित्वं साधारणत्वं तन्मात्रस्य दूषकत्वात् विरुद्धस्यापि तत्वाज्ञाने विपक्षवृत्तिताज्ञानदशायां साधारणत्वम् अन्यथा तस्य हेत्वाभासान्तरतापत्तेः उपाधेरसंकर एव । सर्वमनित्यं मेयत्वादित्यनुपसंहारी शब्दो नित्यः शब्दत्वात् भूर्नित्या गन्धवत्त्वादित्यसाधारणश्च वस्तुगत्या साध्याभाववद्वृत्तित्वेन साधारणोऽपि पक्षतादशायाम् उद्भावयितुं न शक्यतइत्युभयोर्भेदेनोपन्यासः ॥ इतिचिंतामणिः ॥ छ छ छ छ छ छ



॥ श्रीगणेशायनमः ॥ अथ ॥ शिरोमणिः ॥ यद्यपि लक्षणतः सामान्यमप्रतीतवतो विशेषजिज्ञासानुदयात् सामान्यलक्षणानन्तरमेव विशेषविभागो युक्तस्तथापि सव्यभिचारपदस्य साधारणमात्रे प्रसिद्धतया तन्मात्रस्य लक्ष्यभावं बुध्यमानैरन्तेवासिभिरसाधारणादिसाधारणस्य लक्षणस्यातिव्याप्तिस्तद्व्यावृत्तस्यैव च साधुता प्रतीयेत अतस्तद्वारणाय लक्ष्यान्तरमपि दर्शयति सव्यभिचार इति। कश्चित्तु सामान्यज्ञानाधीनो विभागो न तल्लक्षणतः प्रत्ययमपेक्षतेऽतः प्रथमं विभागकरणेऽपि न दोष इत्याह। प्रसक्तिरनुमितिरापत्तिर्वा तदुपधानमव्यापकमतिव्यापकंच तथाविधव्याप्तिभ्रमेण सद्धेतावतस्तद्योग्यता वाच्या सा च तादृशव्याप्त्यादिरूपा न च विरुद्धो भयव्याप्यत्वमेकस्य संभवतीत्याह एकस्येति। साध्येति कोटिद्वयोपस्थापकं सत् साध्यसंदेहजनकं साध्यसंदेहजनककोटिद्वयोपस्थितिजनकमिति यावत्। आश्रयतया विषयितया वा नित्यत्वानित्यत्वोपस्थापकस्य नित्यत्वे साध्ये ज्ञानस्यानुवृत्तत्वव्यावृत्तत्वाभ्यां वन्हितदभावोपस्थापकस्य वन्हौ साध्ये धूमस्य वारणाय जनकान्तम्। तथोपस्थितेः साध्यसंदेहाजनकत्वात् धर्म्मितावच्छेदकपुरोवर्त्तित्वादिविशिष्टधर्म्मिज्ञानस्य संशयजनकतया तद्वारणाय कोटिद्वयोपस्थापकेति। न च तदसाधारणतया संग्राह्यमेवेति वाच्यम् तथात्वेऽपि तदुत्तीर्णतादशायां विशेषदर्शनात् संशयानुपधायकत्वेऽपि तज्जननयोग्यताया अनिवृत्तेः। अन्यथा यथायथं पक्षेद्रौ साध्यतदभावनिश्चयदशायां साधारणाव्याप्तिप्रसंगात्। सत्प्रतिपक्षसम्बलनदशायां हेतुमत्ताज्ञानस्य साध्यसंदेहजनकत्वपक्षे हेतुवारणाय कोटीत्यादिहेतुना साध्यस्य प्रतिहेतुना तदभावस्य उपस्थापनादुभयोपस्थापकत्वं न कस्यापीत्यपि कश्चित्। इदं द्व्यणुकं नित्यमणुत्वादित्यादौ साधारणधर्म्मवत् धर्म्मिज्ञानस्य कोट्युपस्थितिं संशयंच प्रतिहेतुतयातद्विषये धर्म्मिणि सद्धेतौ (अति)प्रसंगः स्यादतः पक्षधर्मतेति पक्षपदं धर्मिमात्रपरम्। नचैवं नित्यो घटः शब्दत्वादित्यत्र बाधाद्यवतारेऽसाधारण्यापत्तिरिष्टत्वात् अन्यथा बाधासिद्ध्योरन्यतरावतारदशायां साधारणासंग्रहापत्तेः असिद्धिसंकीर्णत्वे

शिरो० ३

*मा द्वा २

सव्यभिचारमध्याप्रवेशे सव्यभिचारसंकीर्णतया असिद्धेऽप्यनंतर्भावापत्तौ तस्यातिरिक्तहेत्वाभासत्वापत्तेः न च व्याप्यविरुद्धयोः साधारण्यभ्रमदर्शायामतिप्रसंगः धर्मिणि यद्रूपावच्छिन्नवत्ताज्ञानं साध्यसंशयजनकं तद्रूपावच्छिन्नत्वस्योक्तत्वात् तद्रूपं साधारणत्वादिति सिद्धांते स्फुटीभविष्यति । इदं सविषयकमात्मवृत्ति वा ज्ञानत्वात् इत्यादौ प्रामाण्याप्रामाण्यसंशयस्य तद्घटकीभूतसाध्यतदभावविषयकतया कोट्युपस्थितिरूपस्य जनकीभूतज्ञानविषये ज्ञानत्वे तु नातिप्रसंगशंकापि साधारणधर्मवत्ताज्ञानस्य तज्जन्यकोट्युपस्थितेर्वा संशयजनकतया तज्ज्ञानस्य तादृशसंशयाहेतुत्वात् प्रामाण्यसंशयस्थले तु ज्ञानत्वलक्षणसाधारणधर्मदर्शनात् ज्ञाने प्रामाण्यस्य ज्ञानविषयतात्मकसाधारणधर्मदर्शनाच्च विषये तद्वत्त्वस्य संदेहः अप्रामाण्यशंकाद्यन्वयानुविधानंतु भ्रमत्वज्ञानशून्यविरोधिज्ञानस्य प्रतिबंधकतया तदपसारणप्रयुक्तमित्यस्याकरे व्यक्तत्वात् व्याप्यवत्तासंशयस्य पृथग्व्यापकवत्तासंशयहेतुत्वपक्षे ज्ञानपदं निश्चयपरं हेतुत्वाभिमतविशेषणंतु येन सम्बंधेन तदुभयसाहचर्य्यं तेन सम्बंधेन तद्वत्ताज्ञानस्य संशयादिजनकतासूचनार्थं तेनात्मत्वकपालत्वादिसाध्यके समवायसम्बंधेन हेतौ ज्ञानघटादौ विषयत्वसंयोगादिना तत्संदेहजनके नातिप्रसंग इति । विप्रतिपत्तेः प्रत्येकं कोटिद्वयोपस्थापकत्वाभावात् लक्षणस्थद्वयपदेन तद्वारणात् मिलितस्य तदुपस्थापकत्वेऽपि तद्वत्ताज्ञानं न तथा न वा मिलित्वा द्वयोर्ज्जनकत्वं तथात्वेऽपि वा येन सम्बंधेन तद्वत्ताज्ञानमुभयकोट्युपस्थापकं तेन सम्बंधेन हेतुत्वेऽवश्यं सव्यभिचारत्वमिति । अनुपसंहारी पक्षएवेति अनुपसंहारितादशायां साध्यतदभावसहितत्वनिर्णयाभावेऽप्युक्तक्रमेण वास्तवतत्सहचरितत्वमादायैव लक्षणसमन्वय इति भावः । केचित्तु व्याप्यादिधर्मेऽपि साधारण्यज्ञानात् संशयस्योदयात तदज्ञाने च वस्तुतः साधारण्यज्ञानेऽप्यनुदयात् साधारण्यज्ञानं हेतुस्तत्र निश्चयत्वमकिंचित्करं गौरवात् तथाच पक्षएव तत्संशयात्मकतदुभयसाहचर्य्यज्ञानाद्भवति तथात्व मिति भाव इत्याहुः तच्चिंत्यम् । ननु केवलान्वयिसाध्यका- ३

हचरि

नुपसंहारिणि साध्याभावाप्रसिद्ध्या ततूसंशयाद्यभावादव्याप्तिः एवं यत्र स्थिरे धर्म्मिणि पूर्वं घटत्वं गृहीतमुत्तरदशायां तत्रैव दोषात् घटत्वाग्रहे तद्घटभिन्नोऽयमिति भ्रमे च घटत्वनिश्चयविषयीभवद्धर्मिव्यावृत्तत्वेन गृह्यमाणतया असाधारणे इदन्त्वेऽपि वस्तुतस्तद्व्यावृत्तत्वाभावेन तत्र लक्षणायोगादित्यतस्तयोर्लक्ष्यत्वाभावेन परिहरति केवलान्वयीति। अतएवेति अतएव पुरुषदोषाधीनं तद्दोषत्वम् अतएव तस्यानित्यदोषत्वं साहजिकत्वे कादाचित्कत्वानुपपत्तेः एवंच यत्र दोषताप्रयोजकं वस्तुतो हेतौ तत्रानित्यदोषत्वमपि यत्र पुरुषस्य तद्भ्रमो न तत्र तदपि भ्रममात्राद्दुष्टत्वेऽतिप्रसंगमाह अन्यथेति केचित्। परे तु अयं घट एतत्त्वादित्यादावव्याप्तिः। साध्यसंदेहप्रयोजकं हि तस्य साध्यतदभाववद्व्यावृत्तत्वं नाहि एकस्य धर्मस्य तदुभयव्यावृत्तत्वं संभवति असाधारण्यंतु तस्य पक्षमात्रवृत्तितया अतस्तस्यालक्ष्यतयोत्तरयति अयं घट इत्यादि एवंचावृत्तिगगनादिकमेवासाधारणं पक्षवृत्तित्वभ्रमदशायांचासाधारण्यस्यासंकरः नचोभयव्यावृत्तत्ववृत्तिमत्त्वयोः स्वरूपतो विरोधः निश्चितसाध्यतदभाववद्व्यावृत्तत्वंच न संदेह प्रयोजकं तथा सति तुल्यन्यायतया निश्चितसाध्यतदभाववद्वृत्तित्वस्यापि तथात्वे सद्धेतावपि साध्याभाववत्त्वभ्रमविषयवृत्तित्वग्रहदशायामतिप्रसंगात् नच तादृशनिश्चयविषयस्य धर्मिणो वास्तवं साध्याभावादिमत्त्वमपि तत्र मानाभावात् किंच संदेहजनकतावच्छेदकरूपस्य विशेषणत्वे व्यभिचारिणि रासभादौ महानसादिवृत्तितादशायामव्याप्तिः उपलक्षणत्वे असाधारण्योत्तीर्णतादशायामतिव्याप्तिः असाधारणप्रकरणसमयोस्तत्त्वेन भ्रमविषययोरनित्यदोषत्वंविशेषादर्शनदशायामनुमित्यनुत्पादप्रयोजकत्वं नतु वास्तवं हेतुदोषत्वं अन्यथानुमित्यनुत्पादप्रयोजकज्ञानविषयतामात्रेण वास्तवहेतुदोषत्वे इत्याहुः। अनवगतसाध्यसहचारत्वे सति अवगतसाध्याभावसहचारतया विरुद्धत्वमेव तयोरिति इदंचाभ्युपगमवादेन वस्तुतो यथोपवर्णितलक्षणस्य न तत्राव्याप्तिरिति ध्येयम् यद्रूप ज्ञान मनुमिति प्रतिबंधकम् तदेव

संदेह प्रयोजकत्वे | ९३ | चै | संदेह प्रयोजकत्व कव्याप्ति शेषः | असाधारण्य त्वेन प्रकरणसम त्वेन

निश्चयघटितसामानाधिकरण्यकेनापि सव्यभिचारता + स्य स्वीकारादित्यर्थः॥ | साध्यसाहचर्य्यप्रकारकनिश्चयविशेष्यताशून्यत्वे सति। साध्याभावसाहचर्य्यप्रकारकनिश्चयविशेष्यताया

१ मूलोक्तलक्षणज्ञानं

हृदो द्रव्ये धूमवत्त्वात् द

विभाजकं अन्यथा अतिप्रसंगइत्यभिप्रेत्य दूषयति नैतदिति । वस्तुतस्तु उपस्थापकत्वादिज्ञानं मनुमिते स्तज्जनकस्य वा न प्रतिबंधकं विरोधिविषयकत्वाभावात् एवमुत्तरत्रापि पक्षवृत्तित्वेसतीति विरोधित्वं विरोधिज्ञान विषयत्वं अव्यावृत्तिपदं अत्यंतायोगव्यच्छेदार्थकं तेन संयोगसंबंधेन व्यभिचारिणि द्रव्ये हेतौ व्यभिचाराभावदशायां नाप्रसंगः साध्यवद्वृत्तिस्तुनासाधारण इति हृदयं । अपक्षधर्म धूमादि वारणाय सत्यंतं। पक्षः संदिग्धसाध्योधर्मी विशिष्ट हेतौ तद्वृत्तित्वग्रहाविरोधित्वंच तदर्थः तथाच पक्षतावच्छेदकरूपेणपक्षे साध्यतावच्छेदकरूपेण साध्यस्यहेतुतावच्छेदकरूपेणहेतोर्ज्ञायज्ज्ञानम् तद्विरोधित्वस्यलाभात् पक्षसाध्यसाधनाप्रसिद्धिस्वरूपासिद्धिबाधप्रतिरोधानां निरासोऽसिद्धिसंकीर्णसंग्रहः विरोधोऽपि फलतः प्रतिरोधएव तदन्यत्वेन वा विरोधिविशेषणीयं वक्ष्यते च सिद्धांते विरुद्धान्येति हेतुसाध्यसामानाधिकरण्यग्रहाविरोध्यर्थकं संबंधपदबलेन प्रकृतहेतुसंबंधितया विरोधित्वे तात्पर्योपवर्णनेन प्रायशो बाधादिवारणेऽपि घटत्वमनित्यं घटत्वादित्यादौ प्रयत्नसाध्यमिवतत्प्रतिभाति वस्तुतस्तुअनुमितिपदं तत्कारणज्ञानपरं आश्रयासिद्ध्यादिवारणाय सत्यंतं तादृशपक्षकतादृशहेतुकग्रहाविरोध्यर्थकं अनया च वाचोभंग्याव्याप्तिग्रहविरोधित्वमेवाभिदित्सितं तेन वन्हिमान् वन्हिमान्ह्रदत्वादित्यादौ हेतोः साध्यवद्वृत्तित्वादेर्नासंग्रहः विवेचयिष्यते चेदमुपरिष्टात् । सपक्षेति संपातायातं अतएवानुपदं विरुद्धोपीऽत्यादिकं व्यर्थेति विशेषणं पक्षवृत्तित्वं साध्याव्याप्यत्व इति हेत्वाभासत्वम् हेतुवदाभासमानत्वम् वत्यर्थश्च वृत्तिमत्वं एवंच साध्यतदभावव्याप्यत्वग्रहविरोधिवृत्तिमत्वग्रहाविरोधिरूपवत्त्वमर्थः। साध्यतद्भाववद्वृत्तित्वं साधारण्यम् निश्चितसाध्यतद्भाववद्व्यावृत्तत्वमसाधारण्यम् तच्च व्याप्तिद्वयग्रहविरोधीति हृदयं असिद्धिविशेषस्त्ववृत्तित्वं वृत्तिमत्वग्रहविरोधि साध्यतद्भाववद्व्यावृत्तत्वमपि यदीदृशं तदा असिद्धिरेवनोचेदिदमेवासाधारण्यं बोध्यं साध्याप्रसिद्ध्यादिवारणाय विशिष्टसाध्यसाधनग्रहाविरोत्वं

^ धि

४

वाच्यं व्यापकसामानाधिकरण्यमिह व्याप्यत्वं तेन च द्वितीयस्य भेदः रीतिस्तुल्यैव। केचित्तु असाधारण्याभावकालावच्छिन्न-
साध्यतदभावव्याप्तिशून्यत्वं विवक्षितं विशेषणाभावात् वस्तुतो व्याप्यस्य विरुद्धस्य वा असाधारणस्य संग्रह इत्याहुस्तच्चिंत्यम्
व्यर्थेति विरोधादेर्वारकं साध्याभावेत्यादि व्यर्थं तस्य पार्थक्ये प्रमाणाभावादितिभावः। प्रथममित्यादि गगनमित्यादि च दूषणं
यथाश्रुते नापीत्यादि सपक्षविपक्षत्वावच्छिन्नव्यावृत्तत्वं सर्वतद्व्यावृत्तत्वं व्यर्थेति सपक्षवृत्तित्वविपक्षव्यावृत्तत्वयोर्दूषकतायामनुप-
५०५ योगादितिभावः। पक्षातिरिक्तेत्यादि व्याप्यविरुद्धयोरसाधारण्योः संग्रहाय पक्षातिरिक्तपदे पक्षत्वं संदिग्धसाध्यकत्वम् धूमेत्या-
दि दूषणं यथा श्रुते नतु सप्तमीसमासात् पक्षातिरिक्ते वर्त्तते यत्साध्यवन्मात्रवृत्ति साध्याभाववन्मात्रवृत्ति च तद्भिन्नत्वमि-
त्यर्थे इति ध्येयम्। पक्षवृत्तीत्यादि विरोधः साध्यासामानाधिकरण्यं पक्षवृत्तित्वसाध्यसामानाधिकरण्यग्रहाविरोधी योऽनुमि-
तेरौपयिकस्य जनकज्ञानविषयस्य संबंधस्य सपक्षसत्त्वादेरभावस्तद्वत्वमित्यर्थः सपक्षविपक्षव्यावृत्तत्वस्य चासाधारण्यस्य असा-
धारण्य निश्चये पक्षे साध्यसामानाधिकरण्यसंदेहान्न तस्य तज्ज्ञानविरोधित्वं॥पक्षवृत्तौ विरुद्धभिन्ने च वर्त्तते यस्तादृशोऽभाव
स्तद्वत्त्वमर्थ इति केचित्। पूर्वोक्तलक्षणानां यथोक्तरीत्या यथामतं नाव्याप्त्यादिसंभावना। परंतु तज्ज्ञानस्यानुमित्यप्रतिबंध-
कतया तेषां हेत्वाभासतावच्छेदकत्वं नघटते। नघटतां किं तेन तेषां हेत्वाभासविभागमात्रोपयोगित्वादित्याशयेनाहउच्यत
इति। संदेहं प्रत्येव साधारण्यादिविशिष्टधर्म्मवद्धर्मिज्ञानत्वेन हेतुता तज्जनककोटिद्वयोपस्थितिं प्रति तु तादृशधर्म्मज्ञानत्व-
मात्रेणेत्यभिप्रेत्याह उभयेति साध्यसंदेहजनकेति प्रकृतं यथाकथंचित् कोटिद्वयोपस्थितिः स्मृत्यनुभवसाधारणीसंदेहजननी-
नियामकंतु साधारण्यादिविशिष्टधर्मवत्ताज्ञानम् अतएव धारावाही संदेह इति मते तु धर्मितावच्छेदकविशिष्टे धर्मिणि यद्रूप-
विशिष्टज्ञानं साध्यसंदेहजनकं तद्रूपवत्त्वमेव वक्तव्यं कोटिद्वयसहचरितत्वादिना ज्ञातस्य उर्द्धत्वादेरूर्द्धत्वत्वादिना धर्मिणि

अ

ज्ञानमेव संशयजनकं नतु तदानीं साहचर्य्यज्ञानमपेक्षत इति नये तु यद्रूपविशिष्टत्वे न गृहीतस्य धर्म्मस्य धर्मिवृत्तिताज्ञानं तथा तद्वत्त्वमेव वाच्यम्। तच्चेति ननु साधारण्यं न साध्यतदभाववद्व्यावृत्तत्वं वृत्तिमतस्तथात्वासंभवात् एककोटिव्याप्यस्यैव एककोटिमद्व्यावृत्तस्यापि धर्म्मस्य बुद्धेर्विशेषदर्शनतया संशयविरोधित्वाच्च सत्प्रतिपक्षे च परामर्शाप्रामाण्यसंशयोत्तरमेवसाध्यसंदेहा न्नापि निश्चितसाध्यतदभाववद्व्यावृत्तत्वं तद्धि यत्र यत्र साध्यादिमत्तानिश्चयस्तद्व्यावृत्तत्वं येन येन रूपेण यत्र यत्र तन्निश्चयस्तेन तेन तद्व्यावृत्तत्वं वा। आद्ये सर्व्वाणि साध्यव्याप्यवंति साध्यवंति सर्व्वाणि वा असाध्यवंति प्रमेयाणीत्यादिनिश्चये सामान्यतः पक्षेऽपि साध्यादिनिश्चयादतथात्वप्रसंगः। द्वितीये तु विशिष्यपक्षे साध्यनिश्चयं विनैव शब्दादिना साध्यव्याप्यत्वनिर्णयेऽपि तथात्वापत्तिः नैष दोषो यादृशव्याप्तिग्रहे सति नासाधारण्यं तदग्रहभावेन विशेषलक्षणस्य साधारण्याभावविशिष्टस्य तदग्रहस्य चाभावेन सामान्यलक्षणस्य विशेषणादतिव्याप्तिनिरासात् विशिष्टाभावादेव च साधारण्ये व्याप्तिभ्रमदशायां नाव्याप्तिरितिचेत् एवं सत्येकेन व्याप्तौ गृहीतायामसाधारणस्य न किंचिदपि प्रति सव्यभिचारित्वं स्यात् स्याद्वा तदपि तत्तत्पुरुषघटितमसाधारण्यवत् साध्यादिव्याप्यवत्त्वेन रूपेण साध्यादिमत्त्वानिश्चयेऽव्याप्तिप्रसंगाच्च न हि घटोऽनित्यो घटाद्व्यावृत्तं शब्दत्वमितिवत् अनित्यत्वव्याप्यवतो व्यावृत्तं शब्दत्वमिति तदानीं निश्चयः अभिहितंच निश्चितसाध्यतदभाववद्व्यावृत्तत्वं न संशयप्रयोजकं किंतु साध्यतदभावाभ्यां सहचरितत्वमिव तत्सहचारिताभावप्रतियोगित्वम् व्याप्यविरुद्धयोस्तु तत्त्वेन निश्चितयोर्द्दर्शने विशेषदर्शनवशादेव न संशय इति विभाव्य लक्षणान्तरमाह विरुद्धान्येति विशिष्टसाध्यहेतुसामानाधिकरण्यग्रहाविरोध्यर्थकमर्थतो विरोधिविशेषणं तेन साध्यसाधनयोरप्रसिद्धेरवृत्तित्वस्य परंपरासामानाधिकरण्यादीनांच निरासः पक्षपदंच धर्मिमात्रपरं तथाच यद्यद्धर्म्मिवृत्तित्वं हेतोर्ज्ञायते तत्र तत्रैवानुमितिविरोधि यद्रूपं तद्वत्त्वमित्यर्थः साध्यव्यापकीभू- ५

ताभावप्रतियोगित्वंतु तथा बाधप्रतिरोधौ तु धर्म्मिविशेषितत्वात् न तादृशौ सर्वं साध्याभाववत् तद्व्याप्यवत्त्वेत्यादिकंच साध्यवत्त्वग्रहविरोधित्वेन सामानाधिकरण्यग्रहविरोधिसाध्यानुमितिसामान्याविरोधित्वं वा विशेषणं तेनैवेति तेनानुमितिविरोधिना विपक्षवृत्तित्वादिना एवकारेणानुगमकं रूपं व्यवच्छेद्यं तस्य हेत्वाभासतावच्छेदकत्वं निरस्यति हेत्वाभासस्य लक्षणानुरोधेनेति तेनानुमितिविरोधित्वघटितलक्षणकरणेन असाधारणस्य सत्प्रतिपक्षोत्थापकतया दूषणत्वपक्षे नाव्याप्तिरितरथा पुनरव्याप्तिरेव साध्याभावज्ञापकत्वेन साक्षात्साध्यवत्तानुमितिविरोधित्वेन। सर्वमनित्यमित्यादि संप्रदायमनुरुध्योक्तम् अतएव तावग्रेऽन्तर्भावयिष्यति नापीति निश्चितसाध्यवति साध्यवद्भिन्ने च वर्त्तमानत्वमित्यर्थः। अनुपसंहार्य्य इति साध्यवदन्यवृत्तित्वांशस्य तत्रापि सत्त्वादिति भावः नापीति इह संपक्षत्वं न निश्चयगर्भमतो नाभेदः घट इत्यादि इत्यस्य विरुद्धस्य अनुपसंहार्य्यस्य प्रसिद्धस्य च विरुद्धांतरस्य व्यवच्छेद्यत्वादित्यर्थः अन्वयतो व्यतिरेकतश्च सहचाराग्रहदशायामीदृशं द्वित्वमनुपसंहारीति मतेनेदमित्यपि कश्चित्। विपक्षेति अत्र विपक्षत्वं साध्याभाववत्वम् अनुपदमेव वस्तुगत्या साध्याभाववद्वृत्तित्वेन साधारण इति मूलएव स्फूटतरमभिधानात् न तु निश्चयगर्भं तज्ज्ञानस्याप्रतिबंधकत्वात् न च वस्तुतो यत्र तन्निश्चयस्तद्वृत्तित्वज्ञानं प्रतिबंधकं रूपांतरेण साध्याभाववत्तया निश्चिते रूपान्तरेण हेतुज्ञानेऽप्यप्रतिबंधात् नचैकेन रूपेण तत्तथा गौरवात् हेतुसाध्याभावयोः सामानाधिकरण्यास्फुरणेनाविरोधात् साध्याभाववद्वृत्तिर्हेतुरित्यादि शब्दज्ञानानामप्रतिबंधापाताच्च यत्तु साध्याभावांशे निश्चयरूपं शेषांशे संशय साधारणं साध्याभाववद्वृत्तित्वज्ञानं प्रतिबंधकमन्यथा पक्षएव साध्यसंदेहेन संदिग्धानैकांतिकत्वापत्तेरिति यदाहुः नहि पक्षे पक्षसमेवा व्यभिचार इति तन्न व्याप्तिनिश्चये हेतौ व्यभिचारसंशयायोगात् तदनिश्चयदशायाम् अनुकूलतर्कास्फूर्त्तौ संदिग्धानैकांतिकत्वस्येष्टत्वात् हेतुसाध्याभावसामानाधिकरण्यावगाहितयैव ज्ञानस्य व्याप्ति-

ग्रहप्रतिबंधकत्वात् अतएव पक्षः साध्यातिरिक्तपक्षधर्मातिरिक्तधर्मवान् मेयत्वादित्यादयोऽनुकूलतर्कविरहिणोबाधप्रतिरोधयोरनवतारेऽपि पक्ष एव संदिग्धानैकान्तिकतया अप्रयोजका गीयंते एवं वन्हिर्दाहानुकूलेत्यादयः शक्तिसाधका अपि अन्यथा पक्षातिरिक्ते सर्वत्र साध्यवत्तानिर्णयाद्व्याप्तिग्रहस्य दुर्वारत्वात् पक्षविपक्षान्यतरत्वादिना सर्वत्र सत्प्रतिपक्षप्रसंगाच्च अथ साध्यतद्वदत्यन्तान्योऽन्याभावगर्भव्यभिचारयोरेकोपादानेऽन्यतराव्याप्तिः साध्यवत्ताज्ञानप्रतिबंधकज्ञानविषयत्वेनाभावद्वयानुगमेऽपि हेतुमति तादृशाभाववत्त्वस्य तादृशाभाववति हेतुमत्त्वस्य तादृशाभावे हेतु. सामानाधिकरण्यस्य साध्यतद्वदादौ हेतुसमानाधिकरणतादृशाभावप्रतियोगित्वादेश्चासंग्रह इति चेत् अत्र वदंति प्रकृतसाध्यसाधनसामानाधिकरण्यग्रहाविरोधिनो ज्ञानस्य विषयतया अन्वयव्याप्तिग्रहविरोधितावच्छेदकत्वेन विभजनान्नासंग्रहः अविरोधिन इत्यंतेन साध्याप्रसिद्ध्यादीनां निरासः यदि पुनरत्यंतान्योऽन्याभावयोरेकतरगर्भव्यभिचारज्ञानस्य नान्यतरगर्भव्याप्तिग्रहविरोधित्वम् इत्यादिकं विभाव्यते तदा साध्यसामानाधिकरण्यघटितत्वेनान्वयव्याप्त्योऽनुगमनीयाः प्रातिस्विकरूपेणोपादाय वा तावद्व्याप्त्यवगाहित्वम् ग्रहस्य वक्तव्यं साध्याव्यभिचरितसामानाधिकरणस्य व्याप्ये प्रसिद्धस्य हेतौ विरहोऽप्येतद्विशेष एव विशिष्टसाध्यसाधनवत्त्वग्रहाविरोधिनोज्ञानस्य विषयतया व्यापकत्वग्रहविरोधितावच्छेदकरूपत्वं वा विभाजकं शेषं पूर्ववत्। साध्य तद्वतोरत्यन्तान्योऽन्याभावौ साध्याभावव्याप्यादिव्यावृत्तेन साध्यवत्ताज्ञानविरोधित्वेनानुगमस्य तत्र हेतुसामानाधिकरण्याभावग्रहविरोधित्वं साध्यवत्ताज्ञान विरोधिनि तादृशाभावग्रहविरोधिहेत्वाभासतावच्छेदकरूपवत्त्वं वा तथा वक्तव्यं साध्याभावव्याप्यादौ तु हेतुसामानाधिकरण्यादिकमविरोधित्वान्नाभासः विरोधित्वं पूर्वोक्तदिशावसेयम् उपदर्शितादिशिष्टव्याप्तिविरहो व्याप्यत्वासिद्धिरेवेति व्याप्तिग्रहकारणसहचारग्रह सहकार्य्यभावप्रतियोगिग्रहविषयत्वेनानुगम इत्यपि कश्चित्। प्राचां मतेनोत्तरयति नं सर्वेत्यादि। सर्वेति विपक्षे-

ऽप्यन्वेति तेन साध्याभाव न्यूनवृत्तेर्व्युदासः विपक्षत्वस्य निश्चयगर्भत्वात् भूरनित्या गंधवत्वात् नित्यः शद्धः शद्धत्वादित्यादौ नाव्याप्तिः पृथिवी रूपवती रसादित्यादौ जलादेर्नीरसत्वभ्रमे पुनरसाधारण्यभ्रम एवेति मंतव्यम्। तथापीति पक्षत्वं संदिग्ध-साध्धकत्वं मतं दूषयति अथेत्यादि। व्याप्तीति तथाच स्वतो दूषणाक्षमत्वान्नाभाषत्वम् उपाधिवदिति भावः एकधर्मिव्या-वृत्तत्वंच न सामानाधिकरण्यग्रहविरोधिधर्म्यन्तरे तत्संभवात् अन्यथा सतोरपि साध्यसाधनयोर्व्यतिरेकित्वं दोषायस्यात् अथायं शंकितुरभिप्रायः पक्षे साध्याभावस्य संशयो निश्चयश्चानुमितिविरोधी विरोधिविषयकत्वात् तत्सामग्री च विरोधिसामग्रीत्वेन तत्रादिमस्य सामग्रीमक्षे सव्यभिचारस्य हेतोर्ग्रहः द्वितीयस्य प्रतिहेतोः परामर्शः अतस्तयोराभासत्वम् अतएव सव्यभिचार लक्षणे पक्षवृत्तित्वं विशेषणं साध्याभाववद्वृत्तित्वमात्रं पुनरसिद्धिरेवेति विरोधान्यस्य परामर्शविरोधिनो रूपस्य तत्त्वादिति मैवं बाधसंशयस्य प्रतिबंधकत्वानंगीकारात् साधारणधर्म्मवत्ताज्ञानस्य संशयसामग्रित्वाभावात् सामग्रित्वेन प्रतिबंधकत्वे हेत्वाभा-सत्वायोगाच्च अन्यथा पक्षस्य साध्यतदभावावद्वृत्ति प्रमेयत्वादिमत्त्वं सर्वत्र हेतावाभासीभवेत् तथा कामिनीजिज्ञासाप्रयोजकं तज्ज्ञानेष्टसाधनत्वादिकमपि। एवं विशिष्टस्यानुद्भाव्यत्वं व्युत्पाद्य केवलस्यापि सपक्षव्यावृत्तत्वस्य तथात्वं व्युत्पादयति किंचेति। वाय्वुपदर्शितदृष्टांतस्य साधनवैकल्यंतु नासाधारण्यं सपक्षान्तरवृत्तित्वेऽपि तत्संभवात् तद्भावनंतु तस्य निग्रहस्थानत्वात् तद्वि-भाजकसूत्रस्थानुक्तसमुच्चायकचकारेण तस्य समुच्चितत्वात् तदाहरणस्याभासता प्रदर्शनायैव वा आवश्यकश्च प्राचां दृष्टांतप्रयोग इति भावः। माभूत् परार्थानुमानेऽऽसाधारण्यं दोषः स्वार्थे तु स्यादत आह स्वार्थेति। स्वमते सिद्धांतमुपक्रमते उच्यत इति अर्थादिति व्यतिरेकिमुद्रया अर्थादुभयं साधयेत् अर्थवशसंपन्नमेवोभयसाधकत्वम् उभयसिद्ध्यनुकूलव्याप्त्यादिग्रहादि-त्यर्थः व्यतिरेकितया वेति पाठे अर्थात् अर्थापत्तिविधयेति परमतेन एवंच पक्षधर्म्मतया ज्ञायमानो हेतुः साध्याभावव्यापकी

भूताभावप्रतियोगित्वज्ञानात् साध्यस्य साध्यव्यापकीभूताभावप्रतियोगित्वज्ञानाच्च साध्याभावस्य साधनायोन्मखो मिथो विरोधेन नैकमपि साधयति। न च शब्दे नित्यत्वानित्यत्वसंदेहे तदुभयव्यापकत्वं शब्दत्वाभावस्य ग्रहीतुमशक्यं व्यापकत्वाभिमतशब्दत्वाभावाभाववच्छब्दवृत्तित्वस्य नित्यत्वानित्यत्वयोः संदिह्यमानत्वादिति वाच्यं तथात्वेऽपि तादृशसंशयाभावदशायां तथात्वनिश्चये तदुभयव्यापकीभूताभावप्रतियोगिशब्दत्ववत्त्वस्य शब्दे प्रतिसंधातुं शक्यत्वात् स्वाश्रयमप्रतीत्यैव प्रतीतस्य सौरभादेरभावस्य पानीयपाषाणादौ पृथिवीत्वतदभावसहचारेण तदुभयव्यापकताग्रहे तादृशाभावप्रतियोगिसौरभस्य चंदनादौ परामर्शे पृथिवीत्वादौ साध्ये तदसाधारण्यस्यातिसुलभत्वाच्च। नन्वयं सत्प्रतिपक्ष एव व्याप्तेरन्वयनिरूप्यत्वस्याव्यापकत्वेनाप्रयोजकत्वादित्यत आह सत्प्रतिपक्ष इति। नचैवं विधभेदेन पृथगभिधानेऽति प्रसंगः स्वतंत्रेच्छाया इत्यादेर्ग्रन्थकृतैवाभिधानात् तदभावसाधके तत्साधकत्वभ्रमरूपाशक्तिविशेषसूचनार्थत्वाच्च सत्प्रतिपक्षसव्यविचारोभयलक्षणाकांततया उभयांतर्भावस्याविरुद्धत्वादित्यपि कश्चित्। सर्वसपक्षेति सपक्षः साध्यवान् पक्षवृत्तित्वे सति साध्याव्यापकीभूताभावप्रतियोगित्वमित्यर्थः इदंच साक्षादनुमितिविरोधि विरोधश्च साध्यासामानाधिकरण्यादिरूपोऽन्वयव्याप्तिग्रहविरोधीति न सांकर्य्यशंकापि साध्यसमानाधिकरणंतु नासाधारणं दशाविशेषे तद्भ्रमस्तु पुरुषदोषो व्याप्य इव साधारण्यभ्रमः। नवीनाः पुनरेवं वर्ण्यंति सामग्रीद्वयविरोधेन हेत्वभावस्य साध्यतदभावव्यापकताग्रहविरोधोऽसाधारणस्य दूषकतावीजं तथाहि वृत्तिमताहेतुना क्वचिदपि वर्त्तितव्यं तत्र चावश्यं साध्यतदभावयोरन्यतरेण भवितव्यं न च तत्र हेत्वभावः संभवति अतोऽवश्यमन्यतराव्यापकत्वं तस्य एवंविधविरोधध्रौव्ये साध्येन तदभावेन च हेत्वभावस्य सहचारज्ञानं नैकतरनिरूपितामपि व्यापकतां ग्राहयति मिथो विरोधात् विरोधिपरामर्शद्वयमिव साध्यतदभावौ एवंच्च वृत्तिमत्त्वविशेषितं हेतोर्यावद्विपक्षसपक्षव्यावृत्तत्वं वृत्तिमत्प्रतियोगित्वविशेषितं वा

हेत्वभावस्य यावत्सपक्षविपक्षवृत्तित्वमसाधारण्यमिति योजयंति च ग्रंथमित्थं शब्दत्वं यदि साध्यतदभाववद्व्यावृत्तत्वेन तदुभयव्यापकीभूताभावप्रतियोगित्वेन ज्ञातं ज्ञानयोग्यं स्यात् तद्वत् स्यादिति यावत् तदा व्यतिरेकितया तादृशव्यतिरेकप्रतियोगित्वेनार्थात् पक्षे तदुभयं साधयेत् तदुभयसहचरितं भवेत् व्यापकाभाववति व्याप्याभावस्यावश्यंभवात् अतथाभावे पक्षधर्म्मतायां व्याप्तेर्व्वानुपपत्तिर्न्न च तथाभावः संभवति न वा पक्षवृत्तित्वं बाधितम् अतः साध्यतदभावो व्यापकतया तदुभयसिद्ध्यनुकूलविरोधिव्याप्तिद्वयग्राहकव्यतिरेकसहचारद्वयग्रहाविषयतया असाधारणो दोषो व्याप्तिद्वयग्रहप्रतिबंधकः । ननु यदि विरोधिव्याप्तिद्वयं न गृह्यते तदा सत्प्रतिपक्षोच्छेदः गृहीतविरोधिव्याप्तिद्वयहेतुसमुत्थत्वात् तस्येत्यत आह सत्प्रतिपक्ष इति। तत्र हेत्वोर्भिन्नतयाधिकरणभेदेन तथा ग्रहःसंभवति अत्र पुनरेकस्मिन् हेतौ तदुभयग्रहो विरुद्ध इत्यर्थः। अत्र चेदं चिंत्यम्। एवं सति सपक्षादेर्यावत्त्वविशेषणं व्यर्थं दूषकतायामनुपयोगात् व्यभिचारग्रहमात्रोपक्षीणत्वात् वृत्तिमत्त्वादिविशेषितस्यापि चासाधारण्यस्य ज्ञानं न व्याप्तिज्ञानविरोधि विरोधिविषयकत्वाभावात् उपदर्शितविरोधस्य तच्छरीरेऽनंतर्भावाच्च व्यापकतयोरपि च न स्वतो विरोधः उपदर्शितरीत्या तदवधारणे चावश्यं व्यभिचारज्ञानमेव प्रतिबंधकमत एव सत्यपि असाधारण्यज्ञाने एकत्रानुकूलतर्कावतारे भवति व्याप्तिधीरिति एतेन तादृशसहचारज्ञानं तुल्यबलविरोधिव्याप्तिग्रहसामग्रीत्वेन प्रतिबंधकं तर्कावतारेपुनस्तुल्यबलतैव नास्तीति परास्तं तर्कस्य व्यभिचारशंकानिवर्त्तकत्वेनैवोपयोगित्वात् सामग्रित्वेन प्रतिबंधकत्वे हेत्वाभासत्वायोगाच्च सत्प्रतिपक्षे च विरोधिव्याप्यवत्तानिर्णयत्वेन प्रतिबंधकत्वं नतु विरोधिसामग्रित्वेन बाधावतारे त्वापाततः सत्प्रतिपक्षितत्वेऽपि बाधेन प्रतिहेतोरव्याप्यत्वादिज्ञान एव साध्यानुमित्युदयादिति कृतं पल्लवितेन । केवलान्वयीत्यादि सद्धेतुत्वं साधारणत्वंच केवलान्वयिनः साधनस्य व्यतिरेकिणस्तु भागासिद्धत्वं साधारणत्वं विरुद्धत्वंच यथासंभवं बोध्यम् । नापीति

केवलान्वयिसाध्यकवारणाय सत्यंतं व्यतिरेकिसाध्यकसद्धेतुवारणाय केवलान्वयीत्यादि पक्षत्वं साधकबाधकमानशून्यत्वं केवलान्वयिसाध्यकेऽपि बाधकमानप्रसिद्धिरुक्तैवेति न सत्यन्तवैयर्थ्यं निश्चितसाध्याभाववत्तन्मात्रवृत्तित्वे त्वसाधारण्य विरुद्ध इति साधारण्यावग्रहदशायामसांकर्य्यमिति वा हृदयम् । अव्यापकत्वादिति सद्धेतुत्वंच व्याप्तिनिश्चयदशायामेवेति भावः । अथेत्यादि पक्षातिरिक्तेन प्रतीतो निश्चितो व्याप्तिग्रहानुकूलोऽन्वयेन व्यतिरेकेन वा सहचारो यस्य स तथा सद्धेतुरेवेति तथाच लक्षणे पक्षातिरिक्तपदं सहचारग्रहस्थलमात्रोपदर्शकं न तु विशेषकमिति विशेषकत्वाभिप्रायेण दूषणद्वयमाह तत्रैवेत्यादि असाधारणे सपक्षव्यावृत्ते पक्षतादशायां शब्दोऽभिधेयः शब्दत्वादित्यादौ जलं निःस्नेहं शीतस्पर्शवत्त्वादित्यादौ च रूपं जलं वा द्रव्यभिन्नं गुणवत्वात् गुणकर्म्मावृत्तिजातिमत्त्वादित्यादौ विरुद्धे चातिव्याप्तिरित्यर्थः ॥ दूषकतायामिति सहचाराभावस्यैव ज्ञानं विरोधि न तु तत्प्रत्यांशस्यापीति अर्थगत्येति अनैकांतिकशब्दार्थविवेचनेन प्रातिस्विकरूपेणैवप्रतिबंधकत्वमित्यवस्थितेरित्यर्था । केचित्तु दूषकतायामसाधकतायाम् । अर्थेति अनेकांतिकशब्दार्थे उभयकोट्युपस्थापकत्वादौ साध्योपस्थापकत्वाद्यंशस्य व्यर्थत्वादित्यर्थ इत्याहुः । विप्रतिपत्तिः पक्षसाध्याभावप्रतीतिः साध्ये पक्षनिष्ठाभावप्रतियोगित्वप्रतिपत्तिर्व्वा आद्ये केवलान्वयीति साध्याभावाप्रसिद्ध्या अव्याप्तिरित्यर्थः । उभयत्र सर्वस्येति अतिव्याप्तेरिति पाठे तन्मात्रवृत्तित्वं तत्त्वंव्याप्यवृत्तिकत्वं तदितरावृत्तित्वं वा आद्ये केवलेति इदंच यथाकथंचिद्व्याप्तिग्रहदशायां द्वितीये सर्वस्येति व्याप्तीत्यादि यत्र यस्येत्यर्थः तथाच हेत्वभिमतशब्दोपसंधानात् तद्धेतुकप्रकृतसाध्यसिद्धौपयिकव्याप्तिग्रहानुकूलोपसंहाराभावस्तस्यानुपसंहारित्वमित्यर्थलाभाद्व्यतिरेकिणि नातिव्याप्तिः । ननूपसंहारः सहचारः तन्निश्चयो वा आद्ये तादृशस्याभावो निखिलप्रसिद्धानुपसंहार्य्यव्यापकः अतिव्यापकश्च रूपं द्रव्यभिन्नं गुणावत्त्वाद्गुणकर्म्मावृत्तिजातिमत्त्वादित्यादेः द्वितीये पुनरज्ञानरूपासिद्धिपर्य्यवसायी

कारणाभावतया स्वरूपसन्नेव दोषो न हेत्वाभास इत्यत आह केवलान्वयीति पक्षः साध्यानिश्चयविरोधिनः साध्यवान्नवेत्यादेः संदेहस्य विषयोऽवच्छेदकत्वंच स्वान्यूनवृत्ति तत्कत्वं तच्च स्वरूपसतोऽप्यविरुद्धं तेन प्रातिस्विकद्रव्यत्वादिरूपेण सर्वत्र साध्यसंदेहदशायां नाव्याप्तिः एवंच सर्वत्रैव हेत्वादिमति. साध्यतदभावसंदेहाद्व्याप्त्यग्रहेणाभासत्वम्। परार्थस्थले वहिर्भावं व्युत्पादयति एवमित्यादिना असिद्धिरनिश्चयः ज्ञाने ज्ञापने स्वार्थस्थलेऽन्तर्भावम् एतेनेत्यादिनाशंक्य निरस्यति उपजीव्यत्वादिति अत्रेदं चिंत्यं हेतुमति साध्याभावसंदेहो नाभासः सत्तयैव विरोधित्वात् तद्विषयस्तु हेतोः साध्याभावसामानाधिकरण्यं साध्यस्य वा हेतुमन्निष्ठाभावप्रतियोगित्वं नास्त्येव केवलान्वयिसाध्यके व्यतिरेकिसाध्यके तु साधारण्य रूपतया संदिग्धानैकांतिकत्वं पर्य्यवसितं विश्वविषयकसाध्यतदभावसंदेहे च कारणीभूतान्वयव्यतिरेकसहचारग्रहविरहात् संशयसामग्र्या साध्यतदभाववत्त्वनिश्चयप्रतिबंधाद्वा व्याप्त्यग्रहेऽज्ञानरूपासिद्धिरेव उपजीव्योऽपि च साध्याभावसंदेहादिर्नाभासः सत्तयैव विरोधादिति यत्तु व्याप्तीति व्याप्तिग्रहानुकूलसहचारनिश्चयत्वावच्छिन्नविरोधिरूपत्वमर्थः विरोधस्तु संशयसाधारणमन्वयमात्रसहचारग्रहं विरुणद्धि असाधारणे व्यतिरेकिणि च न व्यतिरेकसहचारग्रहविरोधः तादृशरूपमंतरेण लक्षणस्यासंभवितया तदेव रूपं लक्षणमाह केवलेति तादृशावच्छिन्नः पक्षः संदिग्धसाध्यकोयस्याश्रयः स तथा तथाच केवलान्वयिधर्म्मावच्छिन्नसाध्यसंदेहविषयवृत्तित्वमनुपसंहारित्वं व्यतिरेक्यादौ केवलान्वयी न साध्यसंदेहविषयतावच्छेदकः साध्यवत्तानिश्चयसामान्यविरोधिसंशयविषयवृत्तित्वं वा तत्त्वं धर्म्मिविशेषनियंत्रितस्तु संदेहो नान्यधर्म्मिकनिश्चयविरोधी साध्यसंदेहविषयताव्याप्य साध्यसिद्ध्यनुकूलव्याप्तिग्रहोपयिकसत्ताकत्वं वा तादृशी च सत्ता अन्वये हेतोर्व्यतिरेके च तदभावस्येति न कश्चिद्विशेषः स्वरूपसत्तादृशसंशयविषये च हेतुमत्ताज्ञानं हेतौ साध्यसामानाधिकरण्यं संशयसामग्रीत्वेन तन्निश्चयप्रतिबंधकं सर्वत्र संशयसामग्र्या निश्चयप्रतिबंधक-

शिरो०
९

त्वकल्पनात् हेतुमति सर्वत्रसाध्याभावसंदेहे हेतौ साध्यसामानाधिकरण्याभावसंशयस्योचित्यावर्जितत्वात् साध्याभावेन साध्यसामानाधिकरण्याभावोपस्थापनादिति नन्न सर्वत्र साध्यसंदेहदशायां क्वचिदपि साध्यसामानाधिकरण्यस्यागृहीतत्वेन तदभावस्य गृहीतुमशक्यत्वात् प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनिश्चयस्याभावधीहेतुताया असकृदावेदितत्वात् अस्तुवा स यथाकथंचित् साध्ये हेतुसामानाधिकरण्याभावसंशयहेतुत्वेन वा तथात्वं न तथापि सामग्रित्वेनप्रतिबंधकतयाहेत्वाभासत्वम् अन्यथा व्यभिचरिताव्यभिचरितसमानासमानाधिकरणव्याप्याव्याप्यपक्षधर्मापक्षधर्मादिसाधनवन्हिः साधनादिसाधारणद्रव्यत्वादिमत्त्वं हेतोः पक्षस्य चाभासान्तरं स्यात् तदुपदर्शितस्यैव तस्यापि ज्ञानस्येतरसाचिव्येन तत्तन्निश्चायिविरोधिसंशयसामग्रित्वात् एवमसिद्ध्यादिनिश्चायकप्रत्यक्षसामग्र्यपि अपि च हेतोः साध्याभावसंदेहविषयमात्रवृत्तित्वं दूषणमिति प्राप्तं तच्च व्यतिरेकिणि हेतौ नियतविषयेणापि संदेहेन सम्पद्यते दूषकतावीजसत्त्वे चासाधारण्यादिसाधारण्यं न दोषाय न वा अत्रैव निर्भरः कर्त्तव्यो हेत्वाभसत्वानुपपत्तेरुक्तत्वादित्यलं पल्लवितेन । इति सव्यभिचार शिरोमणिः ॥ ॥ ७ ॥ ॥ ७ ॥

०तात्पर्य्याबोधेनदोषोद्भा ना आक्षेपः

ॐश्रीगणेशायनमः ॥ अथगादाधरी सव्यभिचारसामान्यलक्षण मनुक्त्वा मूलकृत स्तद्विभजन माक्षिपति°। यद्यपीति लक्षणतः लक्षणवाक्यतः सामान्यम् साधारणासाधारणानुपसंहारित्रितयसाधारणधर्म मऽप्रतीतवतों ऽतेवासिन इतिशेषः विशेषजिज्ञासानुदयात् आवांतरधर्मप्रकारकज्ञानेच्छोत्पत्त्यसंभवात् सामान्यज्ञानस्य विशेषजिज्ञासायां स्वातंत्र्येणे (१)ष्टसाधनताज्ञानधर्मितावच्छेदकज्ञानसंपादकतया वा हेतुत्वादितिभावः। सामान्यलक्षणानंतरं । सव्यभिचारसामान्यलक्षणानंतरं विभागः सव्यभिचारविभागः सव्यभिचारत्वावान्तरधर्मपुरुष्कारेणधर्मिप्रतिपादनमितियावत् नायंग्रंथोविभागपरः अपितु असाधारणानुपसंहारिणो रलक्ष्यताभ्रमनिबंधनवक्ष्यमाणसामान्यलक्षणातिव्याप्तिभ्रमनिराकरणाय त्रयाणां लक्ष्यताप्रदर्शनपर इति समाधत्ते तथापीति । साधारणमात्रे प्रसिद्धतया भूरिप्रयोगविषय साधारणमात्रकतया तन्मात्रस्य साधारणमात्रस्य अतिव्याप्तिः प्रतीयेत इति संबद्ध्यते तद्व्यावृत्तस्य असाधारणादिव्यावृत्तस्य साधुता निर्दोषता लक्ष्यांतरमिति तथाच सव्यभिचार इति मूलस्य वक्ष्यमाणसव्यभिचारसामान्यलक्षणलक्ष्य इत्यर्थः एतद् ग्रंथस्य विभागपरत्वमुपपादयतो मत माह। कश्चिदिति । सामान्यज्ञानाधीनः सामान्यज्ञानसामान्याधीनः तल्लक्षणप्रत्ययम् लक्षणवाक्याधीनसामान्यज्ञानमात्रम् अत्रच विभागोपयुक्तसामान्यज्ञानस्यो पायान्तरतो ऽभ्युपगमे पश्चादपि सामान्यलक्षणाभिधान मसंगत मनाकांक्षितत्वा दित्यस्वरससूचनाय कश्चि दित्युक्तम् अथँवा सामान्यज्ञानाधीनः त्रितय साधारण किंचिद्धर्मावच्छिन्नज्ञानाधीनः तल्लक्षणप्रत्ययम् सव्यभिचारपदार्थतावच्छेदकवक्ष्यमाणलक्षणज्ञानम् अपेक्षते अत इति तादृशलक्षणाज्ञानेपि

(१) टिप्पणी—श्रीगणेशायनमः ॥ इष्ट साधनता ज्ञानस्याकारं च सव्यभिचारत्वा वान्तर धर्म प्रकारक ज्ञान मदीष्ट साधनं तादृशज्ञान धर्मितावच्छेदकं। आवान्तर धर्मप्रकारक ज्ञानत्वं तत्तु सव्यभिचार ज्ञानाधीनं। अतः धर्मिता वच्छेदक संपादकतया हेतुत्व मस्तीति भाव ः॥

सव्यभिचारपदार्थत्वरूपसामान्यज्ञानस्य शिष्याणां स्वत एव संभवेन विशेष जिज्ञासा संभवा दिति भावः। अत्रच सव्यभि-
चार पदार्थत्वेन त्रयाणां ज्ञानेपि प्रथमं सव्यभिचार पदार्थ एव कीदृश इत्येव जिज्ञासोदिति नतु सव्यभिचार पदार्थाः कती
ति प्रथमं विभागो ऽनुचित इत्यस्वरसबीजम् प्रसंजक पदस्या नुमापका पादकयो रेकतर मात्र परत्वे ऽसाधकत्वा दित्यादि
दोष द्वया संगते स्तत्संगमनाय प्रसक्ति पदार्थं वितर्कयति प्रसक्तिरिति प्र पूर्वक संज धात्वर्थ इत्यर्थः तत्कोटि व्याप्य-
स्यापि व्याप्तिभ्रमेण तद्विरूद्ध कोटेरापादकत्व मनुमापकत्वं च संभवती त्येकस्योभयं प्रत्यसाधकत्वादित्यादिदोषा
संगति रित्यत आशयं पूरयति तदुपधान मिति प्रसक्त्युपधायकत्व मित्यर्थः अव्यापक मिति। येन हेतुना कदाचि
दपि साध्यस्य तदभावस्य वा अनुमिति रापत्ति र्वा नजनिता प्रत्येकमपि तदसंग्राहक मित्यर्थः। तथाविधेति साध्याभाव
निरूपितेत्यर्थः तद्योग्यता प्रसक्तियोग्यता वाच्या प्रसंजकपदेन विवक्षणीया तद्योग्यताया स्तत्स्वरूपयोग्यज्ञानविषयतारू- कारण ज्ञान
पत्वे व्याप्तिभ्रमविषयता मादाय पुनरुक्तदोषप्रसंग इत्यतो योग्यतां व्याचष्टे साचेति तत्कोटिप्रसक्तियोग्यताचेत्यर्थः
व्याप्त्यादिरूपा (१) तत्कोटिनिरूपितव्याप्त्यादिरूपा साध्यसंदेहेत्यादि यथाश्रुतमूलग्रंथात्पक्षधर्मताज्ञानस्य साध्यसंदेहजन-
कत्वं कोटिद्वयोपस्थितिजनकत्वं च लभ्यते तत्रच नित्यत्वादिसाध्यकज्ञानादिहेतौ वक्ष्यमाणातिव्याप्ति० वारयितु मशक्यैव ०पृ११ पं२८
नित्यत्व तदभाव विषयक ज्ञानवा नयमिति ज्ञानस्य नित्यत्व तदभावो पस्थापकत्वात् धर्मितावच्छेदकप्रकारक
ज्ञान मुद्रया तादृश ज्ञान वदिदंत्वावाच्छिन्न धर्मिक नित्यत्वादि संशय हेतुत्वाच्च (२) नच फलीभूत संशय धर्मिता

(१) टि०—तथाच प्रकृत साध्यानुमिति जनकतावच्छेदकत्वे सति। तदभावा नुमिति जनकता वच्छेदक व्याप्ति विशिष्टत्वं। वैशिष्ट्यं च स्वरूपसंबंधेन॥

(२) टि०—फलीभूत संशय धर्मिता वच्छेदकता यादृश धर्मे पर्याप्ता तादृश धर्मा वच्छिन्न विशेष्यक यद्रूपावच्छिन्न प्रकारक ज्ञानत्वं संशय जनकताव-

च्छेदकं तद्रूपवत्वं विवक्षितं। पर्याप्त्यधिकरणत्वा निवेशे नित्यत्व तदभाव विषयक ज्ञानवानयंनित्यो नवेति संशयं प्रति इदंत्वा वच्छिन्न विशेष्यक नित्यत्व तदभाव विषयक ज्ञान प्रकारक ज्ञानत्वेन जनकतया नित्यत्व साध्यक ज्ञानादि हेतोः सव्यभिचारत्वापत्तिः। नचैवं धूमवत् पर्वत कालीन वन्हिमानि त्यादौ पर्वतो धूमवत् पर्वत कालीन वन्हिमान् नवेति संशय जनकता वच्छेदकी भूत साध्य विषयतांतःपाति पर्वतत्वावच्छिन्न विशेष्यता निरूपित धूमत्वा वच्छिन्न प्रकारताया फलीभूत संशय धर्मिता वच्छेदकता पर्याप्त्यधिकरण धर्मा वच्छिन्न विशेष्यता निरूपितत्वा दतिव्याप्ति रिति वाच्यं तादृश धर्मा वच्छिन्न विशेष्यता निरूपित यद्रूपावच्छिन्न प्रकारता फलीभूत संशय जनकता नतिरिक्त वृत्तिः तद्रूपवत्वस्यैव विवक्षितत्वात्। एवं सति नित्यत्व तदभाव विषयक ज्ञानवान् इति ज्ञानीय तादृश विशेष्यता निरूपित शुद्ध ज्ञानत्वा वच्छिन्न प्रकारतायाः नित्यत्व तदभाव विषयक ज्ञान वानयं नित्यो नवेति संशय जनकता नतिरिक्त वृत्तित्वेन नित्यो ज्ञाना दित्यत्रा तिव्याप्ति रतो ऽनतिरिक्त वृत्तित्वं विहाय स्वरूप संबंध रूपा वच्छेदकत्वस्य निवेशनीय-तया धूमवत् पर्वत कालीन वन्हिमान् धूमा दित्यादा वतिव्याप्तेः फलीभूत संशय धर्मिता वच्छेदक धर्मावच्छिन्न मुख्य विशेष्यता निरूपित यद्रूपा वच्छिन्न प्रकारता संशय जनकता वच्छेदिका इति विवक्षणेनैव वारणात्। अथ नित्यत्व तदभाव विषयक ज्ञान वानयं नित्यत्व तदभाव विषयक ज्ञान वानिति ज्ञानीय तादृश विशेष्यता निरूपित विशिष्टज्ञानत्वावच्छिन्न प्रकारताया अवच्छेदकत्वेन तत्रा तिप्रसंगोऽशक्य वारणाय चफलीभूत संशय धर्मिता वच्छेदकता पर्याप्त्य धिकरण धर्मा वच्छिन्न विशेष्यतात्वा वच्छिन्न निरूपकत्व विशिष्ट यद्रूपा वच्छिन्न प्रकारत्वं संशय जनकता वच्छेदकं तद्रूप वत्व मिति विवक्षणे न दोषः। इदंत्व मात्रा वच्छिन्न विशेष्यतात्वा वच्छिन्न निरूपकताकत्व घटित रूपस्या वच्छेदकत्वा वच्छेदकत्वेन नित्यत्व तदभाव विषयक ज्ञान वदि दंत्वा वच्छिन्न विशेष्यतात्वा वच्छिन्न निरूप्यताया एक व्यक्तिवया इदन्त्वा वच्छिन्न विशेष्यता निरूपितत्व रूपेण तादृश जनकता वच्छेदकत्वात् तादृश प्रकारतात्वस्य जनकता वच्छेदकता वच्छेदकत्वा च विशिष्टस्य सुतरां जनकता वच्छेदकतावच्छेदकत्वात्। यदिच तादृश विशिष्ट धर्मे जनकता वच्छेदकता वच्छेदकता पर्याप्ति निवेश्यते तदा ऽसंभवः। लाघवेन तद्धर्मा वच्छिन्न विशेष्यता निरूपित प्रकारता त्वेनावच्छेदकत्व स्वीकारेनैवोपपत्ते रनवच्छेदकी भूत विशेष्यतात्वा वच्छेद्यत्वांशान्तर्भावेन जनकता वच्छेदकत्वस्य पर्याप्ते रसंभवात्। एतच्चा नुमिति ग्रंथे प्रकारान्तरा नुसरणे च गौरव

(नित्यत्व तदभाव विषयक ज्ञानवानयं नित्यो न वा इदं च नित्यो न वा इत्याकारक संशय)

मित्यादिना भट्टाचार्येण स्फुटी कृत मिति विभावनीयं ॥ ॥

वच्छेदकता यादृश धर्मे पर्याप्ता तादृश धर्मावच्छिन्न विशेष्यक यत्प्रकारक ज्ञानत्वेन संशयं प्रति हेतुतेति विवक्षणे नायं दोषः। तादृश ज्ञानस्य धर्मितावच्छेदक प्रकारक ज्ञान मुद्रया नित्यत्व तदभाव विषयक ज्ञानवदिदंत्व पर्याप्त धर्मितावच्छेदकताकसंशयं प्रत्येव हेतुत्वात्। तादृश धर्मं धर्मितावच्छेदकीकृत्य तज्ज्ञानवत्वानवगाहित्वात्। शुद्ध द२
मिदंत्वम् धर्मितावच्छेदकीकृत्यैव तदवगाहित्वादिति वाच्यम्। एवं सति वक्ष्यमाण धर्मितावच्छेदकातिव्याप्ते ४ रप्रसक्त्या ४पृ१३।
कोटिद्वयो पस्थापकत्वांश निवेश वैय्यर्थ्य प्रसंगादि त्यतो मूल मन्यथा व्याचष्टे। साध्येतीति कोटिद्वयो पस्थापकं सदिति पं७।
एतेन कोटिद्वयो पस्थापकत्वे साध्य संदेह जननो द्देश्यता वच्छेदकता लभ्यते। एवंच धान्येन धनवान् सुखीत्यादौ धनादेः सुखादि प्रयोजकता बोधस्या नुभविकतया उद्देश्य विधेय भावस्थले ऽसति बाधके उद्देश्यता वच्छेदक विधे ययोः प्रयोज्य प्रयोजक भाव बोधस्य व्युत्पत्ति सिद्धत्वा त्कोटिद्वयो पस्थिति जनकतायाः साध्य संदेह जनन निर्वाहकता लाभेन व्यापार जनकतायाश्च फल जनन निर्वाहकत्वात् कोटिद्वयो पस्थिते द्वारत्व लाभ इति कोटिद्वयो पस्थिति द्वारा साध्य संदेह जनकत्वं लभ्यते। दर्शित ज्ञानवत्ता ज्ञानस्य धर्मिता वच्छेदक प्रकारक ज्ञान मुद्रया साक्षादेव साध्य संदेह जनकतया नातिप्रसंगः। कोटिद्वयो पस्थिति द्वारा साध्य संदेह जनकत्वं च साध्य संदेह जनक कोटिद्वयो पस्थिते र्जनकत्वे सति साध्य संदेह जनकत्वं तत्रच विशेष्यांश शरीरनिवेशो निष्फलः सत्यंतदलमात्रनिवेशेनैव सामंजस्यादतस्तंपरित्यज्य निष्कृष्टार्थ माह साध्य संदेह जनकेति जनकांतनिवेशप्रयोजन°माह आश्रयतयेत्यादिना आश्रयतया विषयितया वा नित्यत्वा नित्यत्वो पस्थापकस्य नित्यत्वा नित्यत्वो पस्थिति जनकी भूताश्रयत्वादिरूप संबंधज्ञानविषयस्य ज्ञानस्य नित्यत्वे

साध्ये वारणाय नित्यत्व साध्यक स्थले सव्यभिचारत्वाभाव संपादनायेत्यर्थः एकज्ञानस्य नित्यत्व तदभावो भयाश्रयता विरहा दाश्रयतासंबंध मादाय यथा श्रुतेनातिव्याप्तिसंभव इत्याश्रयवृत्ति ज्ञानत्ववत्वसंबंधो ऽनुसरणीयो ऽत स्तद पेक्षया लघु संबंध मादाय व्यावृत्ति माह विषयितया वेति एक ज्ञानस्य तदुभय विषयकत्वम् निष्प्रत्यूह मेवेति ध्येयं समवायेन हेतावतिव्याप्ति मुक्त्वा संयोगेन हेतावपि तामाह अनुवृत्तत्वेति अनुवृत्तत्वं सामानाधिकरण्यम् व्यावृत्तत्वं विरोधः ताभ्यां वन्हि तदभावो पस्थापकस्य वन्हि तदभावो पस्थिति जनकीभूत तादृश संबंध द्वय ज्ञान विषयस्य धूमस्य वन्हौ साध्ये वन्हि साध्यक स्थले वारणाय सव्यभिचारत्वाभाव संपादनायेत्यर्थः। जनकांतस्य वारकत्वे हेतु माह तथोपस्थि-तें रिति तादृश संबंध ज्ञान जन्यो पस्थिते रित्यर्थः। संदेहा जनकत्वादिति संदेहं प्रति साधारण धर्मा साधारण धर्मवद् धर्मि विप्रतिपत्ति ज्ञानजन्याया एव कोट्युपस्थिते र्हेतुत्वा दितिभावः जनकता च साध्य संशयत्वा वच्छिन्न जन्यता नि-रूपिता ग्राह्या। अतः संबंधान्तर ज्ञानजन्य कोट्युपस्थिते र्विशेषण ज्ञानादि मुद्रया साध्य संशय हेतुत्वेपि* नक्षतिः यद्यसाधारण धर्म ज्ञानादि जन्य संशये व्यभिचार वारणाय साधारण धर्म ज्ञानादि जन्यो पस्थिति जन्यता वच्छेदक कोटौ तादृशो पस्थित्यव्यवहितोत्तरत्व निवेशस्या वश्यकतया साध्य संशयत्वं तत्र प्रयोजन विरहेण न निवेश्यत इत्युच्यते तदा संशयत्वा वच्छिन्नत्वं परित्यज्य तादृश संशयत्व न्यूनवृत्तित्वमेव निवेशनीयम् विशेषण ज्ञानादि जन्यताच न तन्न्यू नवृत्ति रिति नातिप्रसंगः। नचैव मपि नित्यत्व नित्यत्वाभाव सहचरितं प्रमेयत्ववानयम् नित्यत्व तदभाव विषयक ज्ञान वांश्चाय मित्याकारक ज्ञानाभ्यां नित्यत्व तदभाव विषयिणी एकै वोपस्थिति र्जनिता तत्र तादृशो पस्थिति जनक पक्षधर्म-ता ज्ञान विषयत्व मादाय ज्ञाने ऽतिव्याप्ति र्दुर्वारा तादृशो पस्थिति व्यक्तेः साधारण धर्मवत्ता ज्ञान जन्यतया साध्य संश-

*व्यं ९ स्योक्तत्वात्

यत्वा वच्छिन्नं प्रति जनकत्वा दिति वाच्यम् । साध्य संशयत्वावच्छिन्न निरूपित जनकता नियतजन्यता निरूपकीभूत जनकताया एव पक्ष धर्मता ज्ञान विशेषणत्वोपगमा न्नित्यत्वा नित्यत्व विषयक ज्ञानवत्ता ज्ञान जन्यतायाः संशया जनक साधारण धर्मवत्ता ज्ञानाद्यजन्य तदुभयो पस्थिति साधारणतया संशयत्वावच्छिन्न जनकता व्यभिचारित्वेनाति प्रसंग विरहात् साधारण्यादि विशिष्ट धर्मवत्ता ज्ञान जन्य तदुभयो पस्थितीनां च सर्वासां तादृशो पस्थितित्वेन संशयत्वा वच्छिन्नं प्रति हेतुतया तादृश ज्ञान निरूपित कोट्युपस्थिति निष्ठ जन्यतायाः संशयत्वा वच्छिन्न निरूपित जनकता निय तत्व मक्षत मेव। अथवा उक्ता ऽतिप्रसंग वारणाय तादृश जनकता वच्छेदका वच्छिन्नत्व मेव जन्यतायां निवेशनीयम् अव्यवहितोत्तरत्व संबंधेन साधारण्यादि विशिष्ट धर्मवत्ता ज्ञानविशिष्ट तत्कोट्यु पस्थितित्व रूप तादृश ज्ञानजन्यता वच्छेदक धर्म एव च संशय जनकता वच्छेदकः। ननु तादृश ज्ञान जन्य तत्तत्कोट्यु पस्थितित्वं जन्यता पेक्षया तद्घटकस्या व्यवहितोत्तरत्वस्य लघुत्वात् अत आत्माश्रयेण साधारण्यादि धर्मवत्ता ज्ञान जन्यत्वस्य तादृश ज्ञान जन्यता नवच्छेदकत्वेपि नक्षतिः जनकतावच्छेदकावच्छिन्नत्वंच जनकता वच्छेदक पर्याप्ता वच्छेदकताकत्वं तेन साध्यसंदेह जनकतावच्छेदक घटक ज्ञानादे र्नित्यत्व तदभाव विषयक ज्ञानवत्ता ज्ञानादि जन्यतावच्छेदक घटकत्वेपि नक्षतिः। जनकतावच्छेदकतायाः पर्य्याप्ति र्न निवेश्यते प्रयोजन विरहात् तेन साधारण्यादि विशिष्ट धर्मवत्ता ज्ञानस्य जन्यतावच्छेदक कोटौ तद्वैशिष्ट्य मात्रनिवेशेनैवोपपत्तौ प्रयोजन विरहेण संशय जनकतावच्छेदक घटकस्य साध्योपस्थितित्वादेः साधारण धर्मवद्धर्मि ज्ञान जन्यतावच्छेदक कोटा वनिवेशेपि नक्षतिः नचैवम् साध्य संशय निवेशनं व्यर्थम् यत्किंचि ज्जनकतावच्छेदकावच्छिन्न जन्यता निवेशेनैवोपपत्ते र्नित्यत्व तदभाव विषयक ज्ञानवत्ता ज्ञानजन्यतावच्छेदकस्या व्यवहितोत्तरत्व संबधेन तादृश ज्ञानविशिष्ट नित्यत्वादि

विषयकोपस्थितित्वस्य किंचिदपि कार्यं प्रति जनकतावच्छेदकत्वाभावे नातिप्रसंगविरहादिति वाच्यम् तथासति वन्ह्याद्यौ साध्ये रासभ तदभाव साहचर्यादि विशिष्ट प्रकारक ज्ञान मादाय धूमादा वतिप्रसंगा पातात् प्रकृत साध्य संदेह जनकताया अवश्यं निवेशनीयत्वात् नच कोटिद्वय पदस्य प्रकृत साध्यतावच्छेदकावच्छिन्न तदभाव परतया प्रकृत साध्यता वच्छेदकावच्छिन्नादि विषयकोपस्थितित्व घटित धर्मावच्छिन्न जनकतावच्छेदकावच्छिन्न जन्यता निवेशान्नेयमतिव्याप्ति रिति वाच्यम् । एवं सति एतल्लाभायैव संशय पदोपादानात् । ननु साध्य संदेह जनक पक्षधर्मता ज्ञान विषयत्व निवेशेनैव सामंजस्ये कोटिद्वयो पस्थापकत्वां शनिवेशो ऽनतिप्रयोजनक इत्याशंका मपनेतुं तत्प्रयोजन माह धर्मिता वच्छेदकेति तद्वारणाय वन्ह्यादि व्याप्ये तद्विरुद्धे वा पुरोवर्त्तित्वादौ वन्ह्यादि व्यभिचारित्व वारणाय । कोटिद्वयेति । नच साध्यसंदेह जनकोपस्थिति जनकत्व मेव निवेश्यतां किमुपस्थितौ कोटिद्वय विषयकत्व निवेशने नेति वाच्यम् । तथासति व्याप्य विरुद्धयो रतिव्याप्ते स्तथाहि संशयं प्रति तत्तत्कोटि सहचरित धर्मवत्ता ज्ञान जन्य तदुपस्थितित्वेन तदभाव कोटि सहचरित धर्मवत्ता ज्ञानजन्य तदभावो पस्थितित्वेन पृथगेव तत्तत्साहचर्य्य विषयता मन्तर्भाव्य हेतुता कल्प्यते एवं तत्त त्कोट्युपस्थितिं प्रत्यपि तथैव तत्त त्कोटि सहचरित धर्मवता ज्ञानत्वेन हेतुता इत्थंच वन्ह्यभाव सहचरित धूमवानिति ज्ञानजन्य वन्ह्यभावो पस्थिति सहकारेण वन्हि संशय जनक वन्ह्युपस्थिति जनकीभूतं वन्हि सहचरित धूमवा निति ज्ञान मादाय धूमे वन्हि सहचरित जलत्ववानिति ज्ञान जन्य वन्ह्युपस्थिति सहकारेण वन्हि संशय जनक वन्ह्य भावोपस्थिति जनकीभूतं वन्ह्यभाव सहचरित जलत्ववानिति ज्ञान मादाय च जलत्वे ऽतिव्याप्तिः कोटि द्वयोपास्थिति निवेशे च तथाविध ज्ञानयोः प्रत्येकं कोटिद्वयो पस्थापकत्वा भावान्नातिप्रसंगः नच वन्हिसहचरित धूमवान् वन्ह्यभाव

(सं॰ श ... ) पर्वतो वन्हि ... सद्धेतुः
घटो वन्हिमान् द्रव्यत्वात् । विरुद्धः॥

सहचरित धूमवांश्च इत्येतादृश समूहालंबन ज्ञानस्य कोटिद्वयो पस्थापकत्वे नैतद्दोष तादवस्थ्य मिति वाच्यम्॥ ०साध्योप-स्थिति जनकता वच्छेदकीभूता या साध्याभावो पस्थिति जनकतावच्छेदकीभूत प्रकारता तदाश्रयत्व निवेशात् तादृश समू-हालंबन ज्ञान निरूपितयो र्वन्हि तदभाव साहचर्यावच्छिन्न प्रकारतयोः प्रत्येकं तादृश जनकता द्वया वच्छेदकत्व विरहेणा ति प्रसंग विरहात्। धूम सहचरित वन्हिमान् धूमाभाव सहचरित वन्हिमांश्च पर्वत इत्यादि समूहालंबन ज्ञाने प्रकारता वच्छेदक भेदेन वन्ह्यादि प्रकारता भेदात् प्रत्येकं कस्याश्चिदपि प्रकारताया स्तादृश जनकता द्वया वच्छेदकत्वा संभवेपि धूमधूमाभाव सहचरित वन्हिमान् पर्वत इत्यादि ज्ञानीयो भयधर्मावच्छिन्न विलक्षणैक प्रकारताया स्तथात्वेन वन्ह्यादौ लक्षणसमन्वयः। वन्हि तदभाव सहचरित धूमवान् पर्वत इत्याकारको भय साहचर्य्यावच्छिन्न प्रकार-ताशालि ज्ञान मादायातिप्रसंगस्तु तादृश प्रकारता वच्छेदकता पर्य्याप्त्यधिकरण धर्मावच्छिन्नत्व विवक्षया स्वयमेव निराकरिष्यते अथ (१) वन्हि साहचर्य्य मात्रेण वन्ह्यभाव साहचर्य्य मात्रेण वा वच्छिन्ना याव्याप्यस्य विरूद्धस्य वा प्रकारता तस्याश्च उद्बोधकांतर वशात् साध्य तदभावो भय विषयक समूहालंवनो पस्थिति जनक ज्ञानीयतया प्रत्येकं साध्यो पस्थिति जनकतायां साध्यभावो पस्थिति जनकतायां चावच्छेदकत्वेनातिप्रसंगः यदिच (२)

(१) टि०--कल्प द्वया नुसारेण स्थल द्वय मुक्तं यत्रा द्ये व्याप्य विरुद्धयोः कारणता मादाय द्वितीये विरुद्ध प्रकारता मादाया तिव्याप्ति र्बोध्या ॥

(२) टि०—अत्र जनकता समानाधिकरण्य प्रवेशे वन्ह्यभाव सहचरित जलत्व वानि त्यादि ज्ञानीयो भय साहचर्यावच्छिन्न प्रकारता या वन्ह्यु पस्थि-तित्वा वच्छिन्न जनकता समानाधिकरण सैवालो भय विषयक समूहा लंबनो पस्थिति वृत्ति सैवालो पस्थितित्वा वच्छिन्न जन्यता निरूपित जनकता वच्छेदक तया वन्ह्यभावो पस्थिति जनकता वच्छेदक कल्पे च विरुद्धे वन्हिमान जला दित्यादा वतिप्रसंगः ॥

साध्या विशेषणको (१) पस्थितिं वृत्ति साध्य संदेह जनकत्व नियतं यज्जन्यत्वं तन्निरूपितायां साध्या विशेषणको पस्थित्यवृत्ति साध्य संदेह जनकत्व नियतं यज्जन्यत्वं तन्निरूपितायां च जनकताया मवच्छेदिका या प्रकारता तस्याः साध्याभाव विषयकत्व घटित धर्मावच्छिन्न संशय जनकता वच्छेदका वच्छिन्न जन्यता निरूपितायां तादृश धर्मा न वच्छिन्न साध्य (२) विषयकत्व घटित धर्मावच्छिन्न जनकतावच्छेदकावच्छिन्न जन्यता निरूपितायां च जनकताया मवच्छेदिका या प्रकारता तस्या वा निवेशा न्नोक्त दोषः। साध्याभावो पस्थितित्वा वच्छिन्नाया अपि जनकतायाः साध्य विषयकत्व घटित धर्मावच्छिन्नतया विरुद्धातिव्याप्ते र्दुर्वारतया साध्य विषयकत्व घटित धर्मावच्छिन्न जनकतायां साध्याभाव विषयकत्वा नवच्छिन्नत्व प्रवेशः साध्य मुख्यविशेष्यता घटित धर्मा वच्छिन्नत्वं निवेश्यैव वा तादृशातिव्याप्ति र्वारणीये त्युच्यते। तथापि (३) वन्हिमद्वृत्ति वन्ह्यभाववद् व्यावृत्त धूमवानयं वन्हिमद् व्यावृत्त वन्ह्यभाववद्वृत्ति जलत्व वानय मित्यादि ज्ञानीय धूमादि प्रकारता मादायाति प्रसंगो दुर्वार एव (४) वन्हि मद्वृत्ति धर्मवत्ता ज्ञान जन्य वन्ह्युपस्थिते र्वन्ह्यभाव वद्वृत्ति धर्मवत्ता ज्ञानजन्य वन्ह्यभावोपस्थिति सहकारेण संशयजनकता वद्वन्ह्यभाव वद्व्यावृत्त धर्मवत्ता

(१) टि०—साध्यता वच्छेदका वच्छिन्न प्रकारता निरूपित प्रकारिता शून्य इत्यर्थः॥

(२) टि०—अत्र मुख्य विशेष्यत्वं वक्तव्यं अन्यथा वन्हि कालीन रासव वा न्नवे ति संशय जनक वन्हि कालीन रासभ वन्ह्यभाव कालीन रासभाभाव सहचरित धूमवानिति ज्ञान मादाय वन्हिमान धूमादित्य त्रा तिव्याप्ति रिति ध्येयं॥ ॥

(३) टि०—तथाच परदले साध्याभाव विषयकत्व घटित धर्मा न वच्छिन्नत्वं न देय मिति भावः॥

(४) टि०—साध्य समानाधिकरण धर्म वत्ता ज्ञान जन्यों पस्थिति तदभाव समानाधिकरण धर्म वत्ता ज्ञान जन्यो पस्थित्यो र्मिथ स्सहकारेण

साध्य संशय जनक तयो रुसमूहालंबनो पस्थिति वृत्ये कतर जनकतायां साध्य प्रकारत्वा भाव विशिष्टो पस्थिति वृत्तित्व तद वृत्तित्वयो रसत्वेन नाति प्रसंग व्यभिचारे तु तादृश जनकता व्याप्य जन्यता निरूपित जनकता द्वया वच्छेदक प्रकारता मादाय लक्षण समन्वयः ॥

ज्ञान जन्य वन्हृयभावोपस्थिते रपि वान्हिमद् व्यावृत्त धर्मवत्ता ज्ञान जन्य वन्हृयुपस्थिति सहकारेण संशय जनकत्वात् तादृश ज्ञानीय धूम प्रकारताया वन्हि साहचर्य्या वच्छिन्नत्वेन संशय जनक वन्हृयुपस्थिति जनकतायां वन्हृयभाव वद्व्यावृत्तत्वा वच्छिन्नत्वेन च तथाविध वन्हृयभावोपस्थिति जनकतायां तादृश ज्ञानीय जलत्व प्रकारतायाश्च वान्हिमद्व्यावृत्तत्वा वच्छिन्नत्वेन तथाविध वन्हृयुपस्थिति जनकतायां वन्हृयभाव वद्वृत्तित्वा वच्छिन्नत्वेन च तथाविध वन्हृयभावोपस्थिति जनकताया मवच्छेदकत्वात् । मैवम् । साध्य विषयकत्व घटित धर्मावच्छिन्न जनकता वच्छेदको योधर्म स्तदवाच्छिन्न जन्यता निरूपितायां तदवच्छिन्न सहकारिता वच्छेदक साध्याभाव विषयकत्व घटित धर्मावच्छिन्न जनकतावच्छेदकावच्छिन्न जन्यता निरूपितायांच जनकताया मवच्छेदकीभूत प्रकारता निवेशेहि नाति प्रसंग(१)स्तदवाच्छिन्न सहकारिता वच्छेदकत्वंच तदवाच्छिन्ना समवधान प्रयुक्त फलोपधायकत्वा भाववत् स्वावच्छिन्नकत्व मित्यलं पल्लवितेनँनचेति वाच्यमिति परेणान्वयः तत् संशय धर्मिताव च्छेदकेदंत्वादिकं असाधारणतयेति संशय विषय मात्र वृत्तित्वेन सपक्ष विपक्ष व्यावृत्तत्वा दितिभावः संग्राह्यमेव संशय दशायां सव्यभिचार सामान्य लक्षण लक्ष्यमेव तथाच संशय दशायां लक्ष्यतयैव नातिव्याप्ति संभवः तदवाच्छिन्ने साध्यादि निश्चय दशायां च तत्प्रकारक ज्ञानस्य संशयाऽजनकतया संशय जनकता घटितस्य लक्षणस्यै तत्साधारण्यं न संभवतीति हृदयम् (२)

(१) टिप्पणी—तद वच्छिन्ना समवधाने त्यादि ना त्र विरुद्धेप्य तिव्याप्ति वारणं बोध्यं ॥

(२) टिप्पणी—इदंतु बोध्यं । यत्र पर्वतत्वादे पक्षता वच्छेदकता तत्र पर्वतत्वा द्वि सामानाधिकरण्येन साध्य निश्चय दशाया मपि असाधारण्या

भाव दशायां सामानाधिकरण्येना भाव कोटि मवगाहमान संशयो त्पत्तौ बाधका भावा त्तदानीमपि पक्षता वच्छेदकातिव्याप्ति वारणाय तादृशविशेषणं सार्थकं भवती दमयुक्तं ॥

तादृश निश्चय दशाया मेवाति व्याप्तिं संगमयति तथात्वेपीति । तथात्वेपि तदवच्छिन्न विशेष्यक संशयं दशायां तस्य लक्ष्यत्वेपि तदुत्तीर्णता दशाया मसाधारण्यो त्तीर्णता दशायां तादृश धर्मवति साध्यस्य तदभावस्य वा निश्चय दशाया मिति याव द्विशेष दर्शनात् विपरीत निश्चयात् तज्जनन योग्यताया इति तत्प्रकारक ज्ञानस्येत्यादिः अनिवृत्तेरिति अतिव्याप्ते रितिशेष वक्ष्यमाण दोषेणे संशय फलोपधायकता निवेशा संभवा दिति भावः इद मुपलक्षणं फलोपधायकता निवेशेपि संशय जनक ज्ञान शून्यता दशायां साधारणा व्याप्ति भयेन तादृश ज्ञानस्यो पलक्षणविधयैव लक्षणे निवेशनीय तया संशयोपधायक कालान्तरीण ज्ञान विषयता मादाया प्यतिव्याप्तिः संभवतीति बोध्यम् अन्यथा फलोपधायक ज्ञानस्य विशेषण विधया लक्षण घटकत्वे । पक्षादाविति । पक्षे साध्यादि निश्चय सत्त्वेपि धर्मितर विशेष्यक साध्य संदेह जनकता मादायापि लक्षण गमन संभवादा दिपदं । हेतुमत्ता ज्ञान विषयी भूत पक्ष पक्षेतर यावद्धर्मिपरम् । निश्चयदशाया मित्युपलक्षणम् साधारण्यादि विशिष्ट स्वप्रकारक धर्मिज्ञान शून्यता दशाया मप्यव्याप्ति र्बोध्या । साधारणाव्याप्तीति साधारण्यस्य नित्यदोषतया तदा तस्यालक्ष्यतोपगमासंभवादितिभावः कोटिद्वयोपस्थापकत्वांशस्य प्रयोजनान्तरं वर्णयतो मत माह सत्प्रतिपक्षेति स्वमते व्याप्यवत्तानिश्चयस्य संशय प्रतिबंधकत्वमेव नतु कारणत्वं विरोधि परामर्शयो रप्रामाण्यग्रहेतु साधारण धर्मादि ज्ञानादेव संशय इत्यतो जनकत्व पक्षइति हेतुवारणाय व्याप्यवारणाय तस्यापि परामर्शात्मक संशय जनक पक्षधर्मत्ताज्ञान विषयत्वादितिभावः ननु साधारण्यादि विशिष्ट धर्मवत्ता ज्ञानस्येव परामर्शयो रपि साध्यतदभावोपस्थिति द्वारैव संशय जनक-

गादा० १५

१ त्वमिति

त्वात् कोट्युपस्थिति निवेशोपि न प्रतीकार इत्यत आह हेतुनेति । उभयोपस्थापकं साध्योपस्थिति जनकतावच्छेदिका सती तदभावोपस्थिति जनकतावच्छेदकीभूता या प्रकारता तदाश्रयत्वम् निश्चित साध्याभाववद्वृत्तित्वस्य साधारण्य घटकता मते केषुचिद् द्व्यणुकेषु साध्याभावनिश्चयस्य सत्त्व एव अणुत्वस्य तथात्वं संभवतीत्याभिप्रेत्य तादृश निश्चयसत्त्वं सूचयितुं यत्किंचिद् द्व्यणुकस्य पक्षता लाभाय इदमिति। साधारणधर्मवदधर्मिज्ञानस्य नित्यत्वानित्यत्व सहचरिता णुत्व वद्द्व्यणुकस्य ज्ञानस्यधर्मिणि द्व्यणुके नित्यत्वसाध्यकस्थले तस्या लक्षत्व सूचनाय। सद्धेताविति। प्रसंगो ऽतिव्याप्तिः नच समूहालंवन विषयता मादायातिप्रसंग वारणाय कोटिद्वयोपस्थिति जनकतावच्छेदकीभूत विषयता श्रयत्व निवेशन मावश्यकं तथाच कथं-धर्मिण्यतिव्याप्तिः यत स्तत्तत्कोटि स्मृतौ तत्तत्साहचर्य्यादि विशिष्ट विषयक ज्ञानत्वेनैव हेतुता नतु तदविशिष्ट वद्धर्मिज्ञानत्वेन संबंधिविशेष्यक ज्ञानादपि संबंध्यंतर स्मरणादन्यथा ऽयं हस्तिसंबंधी घटपदं घटे शक्त मित्याद्याकारक ज्ञानाद्धस्तिघटस्मरणा-नुदयप्रसंगात्। तथाच धर्मिविषयतायाः कोटिद्वयोपस्थापकता वच्छेदकत्व मेव नास्तीति वाच्यम्।एकसंबंधि विशिष्ट धर्मि-ज्ञानत्वेनैवापरसंबंधि स्मारकतेति मतानुसारेणैवैतल्लक्षण प्रणयनात् एतन्मतस्य निर्युक्तिकतया पक्षधर्मता पदस्य निष्प्रयोजकत्व माकलय्य तत् परित्यागेन सिद्धांतलक्षणस्य वक्ष्यमाणत्वात्। वस्तुतस्तु साध्यसंदेहजनक कोटिद्वयोपस्थितिजनक ज्ञानविषय-त्वमित्यस्य कोटिद्वयोपस्थितिनिष्ठा या साध्यसंदेहजनकता जन्यतासंबंधेना ऽव्यवहितोत्तरत्वसंबंधेन वा ऽवच्छिन्नायां तदव-च्छेदकताया मवच्छेदिका या विषयता तदाश्रयत्वमर्थः (१) एवंच साधारण धर्मादिविशेष्यक ज्ञानस्य कोटिद्वयस्मरणजनकत्त्वेपि संशये धर्मिविषयता नियमाय तद्धर्मिक संशयं प्रति साधारण्यादिविशिष्ट धर्मवत्तद्धर्मिज्ञानविशिष्ट कोट्युपस्थितित्वेन हेतुतेति

(१) टिप्पणी—अत्र मते धर्मि ज्ञानस्य स्वातंत्र्येण कारणता नास्ती तिध्येयं ॥ अव्यवहितोत्तरत्वसंबन्धेन

नित्य द्व्यणुकात् २+ २+

(१) टिप्पणी—साधारण धर्म विषयक ज्ञानत्वे नैवा व्यवहितोत्तरत्वेन जन्यताया वा संबंधेनै तादृश ज्ञान विशिष्टो पस्थितिं प्रति कारणत्वं । उपस्थिते स्तत् संदेहं प्रति साधारण धर्म व र्द्धर्मि ज्ञान विशिष्टो पस्थितित्वे नैवा ता घटपदं घटे सक्त मित्यादि स्मरणो दयादि तिभावः ॥

(२) टिप्पणी—निरुक्त संदेह जनकतावच्छेदकता वच्छेदकताया स्तादृश प्रकारत्वेन विवक्षणे द्यणुके अति प्रसंगा भावात् । पक्ष पदं व्यर्थं । धर्मिता पदस्यैव तादृशार्थ तात्पर्य ग्राहकत्वे पक्ष पदस्य धर्मि मात्र परतया व्याख्याना नर्थक प्रसंग इत्यव ध्येयं ॥

(१)धर्मिविषयताया अपि तादृशसंदेह जनकतावच्छेदकतावच्छेदकत्वा दतिव्याप्तिरतः पक्षधर्मता पदोपादान मावश्यकमिति । पक्ष-धर्मतेति (२) । नच पक्षधर्मता पदोपादानेपि तद्दोष तादवस्थ्यं धर्मिणोपि पक्षधर्मताज्ञान विषयत्वादिति वाच्यम् । तदुपादान वलेन (३) निरुक्तायां जनकतायां जनकतावच्छेदकतायां वा अवच्छेदकीभूता या धर्मिविषयता निरूपित विषयिता प्रकारता पर्य्यवसिता तदाश्रयत्वस्य लाभेनातिप्रसंग विरहात् प्रकारतायाः प्रकारतात्वेनावच्छेदकत्वं विवक्षणीयं । तेन साधारणधर्मादे धर्मितावच्छेदकीभूत सद्धेतौ नातिप्रसंगः (४) धर्मिता वच्छेदकीय विषयतायाः प्रकारतात्व व्याप्येन धर्मितावच्छेदकतात्वेनैव निवेशात् प्रकृतपक्षस्याप्रकृतपक्षताया अनिवेशे प्रयोजनाभावात् पक्षपदं धर्मिमात्रपरतया व्याचष्टे । पक्षपदमिति धर्मिमात्रेति मात्रपदेन पक्षतानिवेशव्यवच्छेदः यत्तु धर्मिपद मत्र मुख्यविशेष्यपरं तेन वन्ह्यभावसहचरित धूमवद्वृति प्रमेयत्वान् पक्ष

(३) टिप्पणी—मत द्वयाभि प्रायेण द्विधा भान मिति ज्ञेयं ॥

(४) टिप्पणी—वन्हि तदभाव सामानाधिकरण द्रव्यत्ववानं पुरोवर्ती पर्वत इत्यादि ज्ञानीय साध्य संदेह जनकतावच्छेदकी भूत प्रकारता श्रयत्व मादाय पर्वतो वन्हि मान पुरोवर्तित्वा दित्यादि सध्येतौ नाति प्रसंगः ॥

इत्यादि ज्ञानीय धूमादि विषयता मादाय नातिप्रसंग इति। तन्न। साहचर्य्य धर्मितावच्छेदकीय विषयताया जनकतावच्छेदक कोटौ प्रयोजन विरहेणा निवेशा न्निवेशेपिवा धर्मितावच्छेदकतात्वेनैव तस्यानिवेशनीयतया प्रकारतात्वेनानिवेशात्। साहचर्य्यस्य धर्मितावच्छेदकविषयतांतः पाति धूमादि विषयता मादाया तिप्रसंगासंभवात्। पक्षपदस्य पक्षताविशिष्ट प्रकृतपक्षपरत्व मावश्यक मन्यथा घटादिरूप पक्षे शब्दत्वादिना नित्यत्वसाधने वाधस्या सिद्धे र्वा ऽवतारदशायामपि सपक्ष विपक्ष व्यावृत्त शब्दत्ववान् शब्द इत्यादि ज्ञान विषयता मादाय शब्दत्वादे स्सव्यभिचारत्वापत्तिः। नचेष्टापत्ति र्दोषान्तरसंकरप्रसंगात् अस्मन्मते च पक्षताविशिष्ट प्रकृतपक्ष वृत्तिताज्ञानस्य विशेषण विधया लक्षणघटकत्वा न्नातिप्रसंगो वाधग्रहस्थले पक्षताया असिद्ध्यवतारे हेतौ प्रकृत पक्षधर्मताज्ञानस्या भावा दित्याशंकते। नचैवमिति। एवं पक्षपदस्य धर्मिमात्रपरत्वे। वाध संपादनायानित्यत्व मुपेक्ष्य नित्यत्वसाध्यत्वानुसरणम्। एवंच घटो नित्य इत्युक्तौ तत्र नञ्प्रश्लेष शंकया नित्यत्व साध्यकत्वं न स्फुटीभवतीति नित्यो घट इत्युक्तं वाधादीत्यादिना असिद्धिपरिग्रहः। असाधारण्यापत्तिः असाधारण्यज्ञानमादाय सव्यभिचारत्वापत्तिः। एतेनास्य सव्यभिचार सामान्य लक्षणतया एतदतिप्रसक्ते रसाधारण्या नापादकत्वा दसंगति रित्यपास्तम्। सपक्षावृत्तित्वेन साधारण्यस्य केवलान्वयि धर्मस्य पक्षता नवच्छेदकत्वा दनुपसंहारित्वस्य चा संभवात् परिशेषेणा साधारण्यापत्ति रिति वार्थः। तदानीं सपक्ष विपक्ष व्यावृत्तत्व सत्त्वे दोषान्तरावतारेऽपि सव्यभिचारत्व मसाधारण्यं चेष्ट मेव क्षतिविरहा दित्याशयेनाह। इष्टत्वादिति। अन्यता पक्षतायाः प्रकृतपक्षधर्मताज्ञानस्य वा विशेषणत्वे। वाधासिद्ध्योरिति। वाधस्या सिद्धेर्वा ऽवतारदशायां ह्रदादौ धूमादि साधने वन्ह्यादे रसंग्रहापत्ते रित्यर्थः। साधारण्यस्य नित्यदोष तया तत्रेष्टापत्ति र्नसंभवतीति भावः। ननु दोषान्तरावतार दशायां सव्यभिचारत्वं क्वापि नेष्यत एव भवतु साधारण्ये प्यनित्यदोषता इत्यत १६

क्ष

आह। असिद्धीति। साधारण्यभ्रम मादायेति। यथायथं साध्याभाववद्वृत्तित्व साध्यवद्वृत्तित्वांशे भ्रमात्मकं साधारण्यज्ञान मादायेत्यर्थः। धर्मणि फलीभूत संशयधर्मितावच्छेदकता पर्य्याप्त्यधिकरणा वच्छिन्ने। यद्रूपावच्छिन्नवत्ताज्ञानं। यद्रूपावच्छिन्न प्रकारता शालि ज्ञानत्वावच्छिन्नं। साध्यसंदेहजनक मिति। एतच्च संशयं प्रति कोटयुपस्थिति विशेषणज्ञानादि मुद्रयैव हेतुः। साधारण धर्मवद्धर्मि ज्ञानं च साक्षादेव तथेति निष्कृष्टमते कोट्युपस्थितिजनकत्वा घटितमेव लक्षणं कर्त्तव्य मित्यभिप्रायेण यथाश्रुत मूलानुरोधे तु संशयजनक कोटिद्वयोपस्थिति जनकत्व मेव निवेशनीयम्। साध्यसंशयजनकं साध्यसंशयजनक कोटिद्वयोपस्थिति जनक मित्यपि व्याचक्षते तन्मते धर्मिणीति प्रकारतात्वेनावच्छेदकतालाभायेतिध्येयम्। अथैवम् साधारण्यादिघटक केवलसाध्यवद्वृत्तित्वाद्यवच्छिन्नत्व मादायातिप्रसंगो दुर्वारः। (१) नच धर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपित यद्रूपावच्छिन्न प्रकारता शालिज्ञानत्वं संशयजनकता नतिरिक्तवृत्ति तद्रूपवत्वस्य॥ साध्यसंशयजनकतावच्छेदकीभूता या धर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकारता तदवच्छेदकतापर्य्याप्त्यधिकरणधर्मवत्वस्य वा निवेशान्नातिप्रसंगः (२)। संशयं प्रति कोटिद्वयसाहचर्याद्यवच्छिन्नप्रकारताशालिनिश्चयत्वेन साधारण्यादिविशिष्टधर्मवत्ताज्ञानस्यै कैकहेतुता कल्पना देकैककोटिद्वयसाहचर्य्याद्यवच्छिन्नप्रकारताशालिज्ञानस्य संशयाजनकतया उभयकोटिसाहचर्य्यादेरेव तादृशधर्मत्वा दितिवाच्यम्। उक्तरूपेणैकैकहेतुताकल्पने एककोटिसाहचर्य्यावच्छिन्नत्व विशिष्टा परकोटिसाहचर्यावच्छिन्नत्वेनैव प्रकारताया निवेशनीय-

(६) टिप्पणी—धूमे ऽतिव्याप्ति विशिष्टान्तरा घटितत्व निवेशनेन वारणेपि वन्हि तदभाव समानाधिकरण द्रव्यत्व वत्पर्वत वृत्ति धूमवान पर्वत इति ज्ञान मादाय अयं नियो ज्ञानादि त्वादौ धर्मि ज्ञान विधया हेतुत्व मादाया तिव्याप्ति द्वितीय कल्पादरः॥

(७) टिप्पणी—यावत्ता भावात् प्रमीय प्रकारतावच्छेदकता निवेशयितुं शक्यत एवे त्याशयः॥

६ एककोटिसाहचर्य्यावच्छिन्नप्रकारताशालि ज्ञानसहकारेणअपरकोटिसाहचर्यावच्छिन्नप्रकारताशालि ज्ञा
स्य संशयजनकत्वात्। एकैककोटिसाहचर्यावच्छिन्नप्रकारताशालि ज्ञानसत्वे। न संशयापत्तिः तथाच

(१) टिप्पणी—एकत्र द्वय मिति रीत्या वच्छिन्नत्व द्वयं प्रकारताया निवेशे गौरवा नवकाशा दित्यत आह व्याप्येति ॥

(२) टिप्पणी—व्याप्या भाव विषयकत्व घटित संशयतोत्कीर्तनस्या संगतत्वा पातात् ॥

तया ऽवच्छिन्नत्वयो र्विशेष्यविशेषणभावे विनिगमनाविरहात्(१) व्याप्यसंशयस्य साधारणधर्मवत्ताज्ञानांतर्भावा नुपपतेश्च। तत्र व्याप्यतदभावयोः प्रत्येकमुभयकोटिसहचरितत्वाभावात्। नच व्याप्यसंशयस्य पृथक्कारणतामत एवेदं लक्षण मितिवाच्यम्। व्याप्यसंशयस्येत्यादिग्रंथविरोधात् (२) (३)नच यद्यद्रूपावच्छिन्नप्रकारकज्ञानत्वेन संशयजनकता तत्तद्रूपवत्त्वस्य संशयजनकतावच्छेदकप्रकारतावच्छेदकतापर्य्याप्तिमंतो ये ये धर्मा स्तत्तद्धर्मवत्त्वस्य वाविवक्षया नातिप्रसंग इतिवाच्यम्। सत्तावत्समवेतजातिमान् सत्ताभाववत्समवेतजातिमानयमित्यादिभ्रमविषयतावच्छेदक सत्तावत्समवेतत्वा द्यादाय सत्तादिसाध्यके जात्यादा वतिव्याप्तेः सत्ताभाव वत्समवे तत्वस्या प्रसिद्ध्या यत्यदेन तदुपादाना संभवात्। वस्तुतस्त्वेवं विवक्षणे ऽसाधारण्यादे रपि तादृश धर्मतया साधारणादेरपि तादृश यावद्धर्मवत्वाभावा दसंभव एव। नच स्वनिष्ठ तादृश प्रकारतावच्छेदक यावद्धर्मवत्त्व विवक्षणे ऽसाधारण्यादि वारणं व्याप्यसंशयेत्यादि ग्रंथसंगतिश्च संभवति साधारण्यादे रप्य ऽसाधारण्यादि प्रकारेण ज्ञानस्य संशायकत्वात्[४] एतेन संशय जनकतावच्छेदकीभूताया या प्रकारता तदवच्छेदकता पर्य्याप्त्यधिकरण धर्मवत्व निवेशेपि ननिस्तारः यद्धर्मिणि यद्रूपावच्छिन्नप्रकारक ज्ञानस्य स्वनिष्ठ यद्रूपावच्छिन्नप्रकारक ज्ञान सहकारेण साध्यसंशयजनकत्वं तदुभयरूपवत्त्वस्य विवक्षितत्वेपि व्याप्यसंशयस्येत्यादि ग्रंथासंगति रशक्य समाधिरेव।

(३) टिप्पणी—अग्रिम ग्रंथे संशयस्य पृथक् कारणता मत माश्रुत्या तिव्याप्ति रभिहिता एतल्लक्षणस्य व्याप्य संशयस्य पृथक् कारणता मत एवाभिधाने तादृश ग्रंथे पृथक् कारणत्वस्योपादानं व्यर्थम् ॥

व्याप्यत्वावच्छिन्न प्रकारकज्ञान सहकारिणो धार्मिविशेष्यकस्वनिष्टरूपान्तरावच्छिन्नप्रकारकज्ञानस्या प्रसिद्धे व्याप्यत्व मादाय व्याप्ये ऽतिप्रसंगा प्रसक्तेः मैवम् । यत्किंचि त्साध्यसंदेह निरूपितायां जनकताया मवच्छेदिका या धर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकारता तदवच्छेदकता पर्य्याप्त्यधिकरण धर्मवत्वं सव्यभिचारत्वम् । साधारण्यादिविशिष्ट हेतुमत्ता ज्ञानजन्य संशयजनकतावच्छेदकी भूता तादृशी प्रकारता साध्याभाववद्वृत्तित्वाद्यवच्छिन्नापि तदवच्छेदकवत्वाभावा न्न व्याप्यादा वतिप्रसंगः । यत्किंचित् संशयनिवेशा दसाधारणादेः साधारणादा वसत्वेपि नक्षतिः व्याप्यसंशयस्यच व्याप्यवत्ता ज्ञानत्वे नैव हेतुता नतु व्याप्याभाव प्रकारकत्व मपि तत्र निवेश्यते । व्याप्यवत्ता निश्चयदशायां तस्य प्रतिबंधकत्वा देव संशयापत्यसंभवात् । अतो व्याप्याभावत्वावच्छिन्न प्रकारतायाः संशयजनकतानवच्छेदकतया व्याप्याभावत्वस्य व्याप्ये ऽसत्वेपि न तत्र वक्ष्यमाणाया अतिव्याप्ते रप्रसक्तिः नच व्याप्यसंशयहेतुताया मप्रामाण्यनिश्चयानास्कंदितत्वस्यैव निवेशाद् व्याप्यवत्ता निश्चया दप्रामाण्यशंकास्कंदिताद् व्यापकसंशयापत्तिः तस्या विरोधित्वा दिति (१)व्याप्यसंशयत्वेनैव व्यापकसंशयहेतुत्व मावश्यक मिति वाच्यम् । यादृश विषये व्याप्यवत्ता निश्चय दशायां व्यापकसंशयस्ये तरसकलकारणसमवधाने तादृश निश्चये ऽप्रामाण्यसंशय एव न जायते तत्रो क्तातिप्रसंगा संभवेन निश्चय साधारण व्याप्यवत्ताज्ञानत्वेन हेतुताया निष्प्रत्यूहत्वात् तादृशस्थलीयाति व्याप्त्यभिप्रायकतयैव तद्ग्रंथस्य व्याख्येतृत्वात् । अथवा व्याप्यवत्ताज्ञानत्वेन या व्याप्यसंशयहेतुता तदवच्छेदक कोटिप्रविष्टा प्रामाण्यनिश्चयानास्कंदितत्वघटक निश्चयत्वं साध्यव्याप्यत्वावच्छिन्नाभाव ज्ञान विशिष्टाप्रामाण्यसंशयान्याप्रामाण्यज्ञानत्वम् तथाच व्याप्याभाववत्ताज्ञानशून्यकालीनाप्रामाण्यसंशयस्यापि यथोक्त निश्चयत्वा त्तद्विशिष्ट व्याप्यवत्ता-

(१) टिप्पणी—अप्रामाण्य यद्यनास्कंदित व्यावर्त्तक धर्मवत्ता ज्ञानस्यैव हेतुत्वा दिति भावः ॥

गादा० १८ ज्ञानकाले आपत्ते रभावात् । नच तथापि व्याप्यवत्ताज्ञानत्वेन एव एकत्र संशयहेतुता नसंभवति तथासति धर्मितावच्छेदक-
सामानाधिकरण्यमात्रावगाहि व्याप्यवत्तानिश्चया त्तदवच्छेदेन व्यापकवत्तां तत्सामानाधिकरण्यमात्रेण व्यापकाभावं मवगाह- वत्तोच्या +२
मानस्य संशयस्या पत्ते स्तादृशसंशये तादृशनिश्चयस्या विरोधित्वा दिति वाच्यम् । धर्मितावच्छेदकावच्छेदेन व्याप्यवत्ता
तमधानी तरे। वगाहिनः संशयादेव तदवच्छेदेन व्यपकवत्तावगाहिसंशयोदया त्तादृशव्यापकवत्तावगाहिसंशये तादृशव्याप्यवत्तावगाहिज्ञानत्वे
५० नैव हेतुत्वो पगमा दुक्तापत्ते रप्रसक्तेः अथवा संशयजनकतावच्छेदक प्रकारतायां सव्यभिचारिता घटक संबंधावच्छिन्नत्व
निवेशस्या वश्यकतया वन्हिव्याप्यधूमवान्नवेति संशयीया भावप्रकारतायाः संयोगादि संबंधानवच्छिन्नतया तत्संबंधावच्छि-
न्नव्याप्यप्रकारतैव संशयजनकतावच्छेदिके त्यतिव्याप्ति प्रशक्त्या नव्याप्यसंशयस्येत्यादेर संगतिः । अथ साधारणधर्मवत्ताज्ञा-
नस्य संशयजनकत्वे धर्मैक्यस्या प्रयोजकतामते तत्संबंधैक्यस्याप्य प्रयोजकतया तन्मते संशयजनकतावच्छेदकयावत्प्रका-
रतासु प्रत्येक मवच्छेदकीभूतानि यानि रूपाणि तद्वत्त्व निवेशे अयमात्मा ज्ञानादित्यादौ विषयतया आत्मत्वाभावसमाना-
धिकरणज्ञानवत्ताज्ञानसहकारेण साध्यसंदेहजनकं यत्समवायेन साध्यसहचरितज्ञानादिमत्ताज्ञानं तदीयप्रकारता मादाय सम-
वायेन ज्ञानादे स्सव्यभिचारितापत्ति रितिचेत् सत्यं विषयतासंबंधेना भावकोटि सहचरित तद्वत्ता ज्ञानीय प्रकारतायाः
समवायसंबंधानवच्छिन्नतया सव्यभिचार घटकसंबंधावच्छिन्नयावत्प्रकारतानंतर्गतत्वात् अतो यत्किंचि त्साध्यसंशयनिरूपित
जनकतावच्छेदकीभूता धर्मितावच्छेदकावच्छिन्ना या या विशेष्यता तन्निरूपितसव्यभिचारिताघटकसंबंधावच्छिन्ना (या या)
प्रकारता तत्तदवच्छेदकधर्मवत्त्व मेव विवक्षणीयम् । तथासति उक्तस्थले विषयतासंबंधावच्छिन्नज्ञानप्रकारतानिरूपित विशेष्य-
ताया अपि निरूक्त यावद्विशेष्यतांतर्गतत्वा त्तन्निरूपितसव्यभिचारिताघटकसंबंधावच्छिन्नप्रकारत्वा प्रसिद्ध्या नातिव्याप्तिः । १८

एव मपि संशयसमुच्चयवैलक्षण्याय उभयप्रकारतानिरूपितएकविशेष्यतास्वीकर्तृमते व्याप्यसंशयीय कोटिद्वयप्रकारतानिरूपितविशेष्यतानिरूपितव्याप्यताघटकसंबंधावच्छिन्नप्रकारतावच्छेदकव्याप्यत्वमात्र मादाया तिव्याप्तिः संभवतीत्याशंक्या व्याप्यसंशयेत्यादिक मभिहितम्। वस्तुतस्तु जनकतावच्छेदक याव त्प्रकारतावच्छेदकवत्त्वादि निवेशे धूमतदभावसहचरितकांचनमयवन्हिमा नित्यादि ज्ञानीय प्रकारताया अपि धूमसहचरित वन्हिमानित्यादि ज्ञानजन्य संशयजनकता वच्छेदक धूमसहचरित वन्हित्वावच्छिन्न प्रकारतात्वादिना। निवेशेन निरुक्त यावत्प्रकारतान्तर्गततया तदवच्छेदकतापर्य्याप्त्यधिकरण कांचनमयत्वादि घटित धर्मवत्ताया वन्ह्यादौ दुरुपपादतया ऽसंभव इति। यत्किंचि त्संशयनिरूपिता धर्मितावच्छेदकावच्छिन्नविशेष्यता घटित धर्मावच्छिन्ना या या जनकता तदवच्छेदकीभूततादृशविशेष्यतानिरूपित प्रकारता वच्छेदकता पर्य्याप्तिमद्धर्मवत्त्व मेव विवक्षणीयम् एवंच कांचनमयत्वाद्यवगाहि तदनवगाहिज्ञानसाधारणकारणताया ऐक्या त्तदवच्छेदकीभूत कांचनमयत्वाद्यनवगाहि ज्ञानीय प्रकारतावच्छेदकता पर्य्याप्त्यधिकरण धर्मवत्त्व मादायैव धूमादिसाध्यक वन्ह्यादौ लक्षणसमन्वयः। संशयं प्रति तत्तत्कोटि साहचर्य्यावच्छिन्न प्रकारताशालि ज्ञानत्वेन साधारण्यादिविशिष्ट धर्मवत्ता ज्ञानस्य कारणताद्वयीति व्याप्यविरुद्धयो रतिप्रसंगो निरस्तः। एवंच व्याप्यसंशयत्वावच्छिन्नाया उभयकोटिप्रकारकत्वावच्छिन्नाया जनकताया ऐक्या त्तदवच्छेदकीभूतव्याप्यप्रकारता वच्छेदकव्याप्यत्व मादाय व्याप्ये ऽतिप्रसंगो दुर्वार एवेत्याशंक्य व्याप्यसंशयस्य पृथक्कारणतामते ज्ञानपदस्य निश्चयपरत्व मुपदर्शितम्। नच व्याप्यसंशयस्य उभयप्रकारकत्वेन नैकहेतुता विशेष्यविशेषणभावे विनिगमनाविरहा दपितु प्रत्येक प्रकारतां निवेश्य हेतुताद्वय मेव कल्पनीय मिति नाऽतिव्याप्ति प्रसक्ति रिति वाच्यम्। हेतुताद्वयकल्पने यत्र व्याप्यवत्तानिश्चयस्य स्वांशे ऽप्रामाण्यसंशयात्मकस्या नंतरक्षणे व्याप्याभाववत्तानिश्चय स्तदुत्तरक्षणे व्याप्यकसंश-

गादा० १९

यापत्तेः। एतेन याव त्प्रकारता निवेशपक्षेपि सव्यभिचारिताघटक संबंधावच्छिन्न निरुक्त जनकतावच्छेदक प्रकारताया यावत्त्वेन ननिवेशः। अयमात्माज्ञानादित्यादावतिव्याप्तेः। अपितु निरुक्त जनकतावच्छेदकीभूता यावत्यः प्रकारताः सव्यभिचारताघटकसंबंधावच्छिन्नानां तासां प्रत्येकावच्छेदकरूपवत्त्वे निवेश्यं एवंचा यमात्माज्ञानादित्यादौ नोक्त क्रमेणा तिव्याप्ति संभवः विषयितासंबंधावच्छिन्ननिरुक्त जनकतावच्छेदकज्ञानादिप्रकारताना मपि निरुक्त यावत्प्रकारतांतर्गततया सव्यभिचारिताघटकसंबंधावच्छिन्नत्वस्य तत्रासत्त्वे तेनरूपेण तदुपादानासंभवात् तथाच तावता व्याप्यसंशयहेतुता मादायाप्यऽतिप्रसंगवारणसंभवेन विशेष्यता यावत्त्वे न निवेशनं ज्ञानपदस्य निश्चयपरत्वं च नयुक्त मिति पूर्वपक्षानवकाशः अथवा व्याप्यसंशयस्य साधारणधर्मवत्ताज्ञानांतर्भावमते एकैककोटि सामानाधिकरण्य मादाय सद्धेतावतिप्रसंगवारणाय यत्किंचि त्संशयजनकतावच्छेदकयावत्प्रकारतापर्य्यंतं निवेशनीयं व्याप्यसंशयस्य पृथक् कारणतामते तु नोक्तक्रमेण सद्धेता वतिप्रसंगशंकावकाशः तन्मते कोटिद्वयसामानाधिकरण्यावच्छिन्नत्वेनैव प्रकारताया जनकतावच्छेदकत्वोपगमात् एकैककोटिसाहचर्य्यावच्छिन्नप्रकारतायाः संशयजनकतानवच्छेदकत्वात् अतो यावत्प्रकारकतानिवेशनं संशये यत्किंचित्त्वनिवेशनंच न कर्त्तव्यम् अपितु व्याप्यसंशयहेतुता मादाया तिप्रसंगवारणाय ज्ञानपदमेव निश्चयपर मुपगंतव्य मित्येव व्याप्यसंशयेत्यादिना अभिहितम् नच धर्मैक्यस्य संशयजनकतायां तंत्रतामतेपि कोटिद्वयसामानाधिकरण्यावच्छिन्नत्वेनैकत्र निवेश्यते विशेष्यविशेषणभावे विनिगमनाविरहात् अपितु प्रत्येकसामानाधिकरण्यावच्छिन्नत्वं प्रत्येकं निवेश्य कारणताद्वयमेव कल्प्यते धूमसहचरितवन्हिमत्ताज्ञान धूमाऽभावसहचरितवन्हिमत्ताज्ञानयोः परस्पर सहकारित्वा न्न कोटिद्वयसहचरित विभिन्नधर्मवत्ताज्ञाना त्संशयप्रसंगः धूमसहचरितवन्हिमान् तदभावसहचरितवन्हिमा नितिज्ञानद्वयादितोऽपि संशयः स्वीक्रियते तथाच सद्धेतावतिप्रसंगवारणाय याव- १९

भावसहचरित धूमाभाववत्ता ज्ञानत्वेन च कल्पनीयत्वात् धूमाभावसहचरितधूमाभाववत्ता ज्ञानत्वावच्छिन्नजनकताया अपि निरुक्तयाव
ज्जनकतां तर्गततया न। तदवच्छेदकप्रकारतावच्छेदकवत्त्वस्य विरहाद्वा तदवच्छेदकप्रकारतायां सव्यभिचारताघटकसंबंधावच्छिन्नत्वाप्रसिद्ध्या नव्याप्यसं
शयमादाय व्याप्यत्वप्रसंगः। इदं च व्याप्यसंशयस्य साधारणधर्मवत्ताज्ञानान्तर्भावमते। संशयजनकताघटकस्य प्रयोजकतामते बोध्यं। एवं

कारणता + द्वयमेव

त्प्रकारतानिवेशनं संशये यत्किंचित्त्वनिवेशनं चावश्यक मितिवाच्यम् विभिन्नहेतुत्वे साहचर्य्यधर्मितावच्छेदकवान्हित्वद्रव्यत्वादिधर्माणां विशिष्यानिवेशे कोटिद्वयसहचरितधर्मवत्ताज्ञानयोः परस्परसहकारितोपगमेपि विभिन्नधर्मवत्ताज्ञाना त्संशयापत्ते र्दुर्वारतया तादृशधर्माणां विशिष्यनिवेशनीयतया कारणतानन्त्यापत्ते रितिसंक्षेपः अथ द्रव्यं विशिष्टसत्वा दित्यादेः सव्यभिचारिता प्रसंगः विशिष्टस्या नतिरिक्ततया विशिष्टसत्त्वादौ साध्यतदभावसहचरितत्व तदवृत्तित्वयोः सत्वा दितिचेन्न गुणकर्मान्यत्व सामानाधिकरण्यरुपं तद्वैशिष्ट्यं वैशिष्ट्यंच हि क्वचिदुपलक्षणतया हेतुतावच्छेदकं क्वचिद्विशेषणतया आद्यं यथा नुमित्यादिलक्षण प्रविष्ट मितरभेदानुमायकतावच्छेदकं यत्तद्व्यक्तिसमवेतत्वादिकं तद्विशिष्टानुमितित्वादिजाते र्व्यक्त्यंतरे ऽसत्वेन भागासिद्धे स्तस्य विशेषणत्वा योगात् अतएव तादृशजाता वनुभवत्वान्यत्वादिविशेषणं व्यभिचारवारकतया सार्थकं द्वितीयंच यथा शब्दो ऽनित्यः वाह्यकरणकप्रत्यक्षत्वेसतिसत्वा दित्यादौ सत्यन्तार्थः तस्यच विशेषणत्वे एव सद्धेतुत्वनिर्वाहात् तथाच दर्शितस्य वैशिष्ट्यस्य उपलक्षणतया हेतुतावच्छेदकत्वे सव्यभिचारित्वमिष्ट मेव विशेषणत्वे विशिष्टनिरूपितसमवायादिरेव हेतुतावच्छेदकसंबंधो वाच्यः अन्यथा यद्धर्मविशिष्टानिरूपितत्वानवच्छिन्न समवायादि र्हेतुतावच्छेदकसंबंध स्तस्य हेतुप्रकारस्य उपलक्षणतया हेतुत्वावच्छेदकत्वा द्विशेषणत्वानुपपत्तेः नच विशिष्टनिरूपितसमवायादे र्हेतुतावच्छेदकसंबंधत्वे तेनशुद्धसत्तादे रप्यव्यभिचारितया तद्विशेषण वैयर्थ्यमिति गुणकर्मान्यत्वेसति सत्वादिति हेतुप्रयोगे निग्रहप्रसंग इति वाच्यम् विशिष्टविशेषणकबुद्धावेव विशिष्टनिरूपितत्वस्य संबंधतावच्छेदकतया तद्रूपविशिष्टनिरूपितसमवायादिना तद्रूपानवच्छिन्नस्य हेतुत्वा संभवात् एवंच विशिष्टनिरूपितसमवायादिना संबंधेन सद्धेतो र्विशिष्टसत्वादे र्न तेन संबंधेन सव्यभिचारत्वप्रसंगः यादृशेन संबंधेन पक्षधर्मताविषयकं यज्ज्ञानं तस्य तादृशेन संबंधेन कोटिद्वयसहचारावगाहितायाः संशयजनकता प्रयोजक-

० तद्वानस्य

०वन्न्य

ज्ञानस्य निश्चयताया अप्रयोजकत्वपक्षेऽपि बोध्यं॥ △ पृ १७ पं १०

त्वात् समवायसामान्यसंबंधेन साहचर्य्यावगाहिनो दर्शित विशेष्यसंबंधेन पक्षधर्मताज्ञानस्य च संशयजनकत्व विरहात्॥ तादृश विशेष्यसंबंधेन द्रव्यत्वा द्यभावसाहचर्य्यस्य सत्तादावभावात तादृश साहचर्य्यावगाहि भ्रममादायाति प्रसंगा नवकाशात् अथ यथा हेतुतावच्छेदकोपलक्षिते व्याप्तिज्ञानस्थलेपि पक्षे तद्विशिष्टवैशिष्ट्यज्ञानादनुमितिरधिकंत्वित्यादि न्यायात्तथा विशिष्टसत्तात्वोपलक्षिते सहचारो यत्र गृह्यते तत्र तद्विशिष्टवैशिष्ट्यस्य पक्षधर्मताज्ञाना दपि संशयोत्पत्ति रुचितेति चेन्न। उभयोः स्थलयो र्विशेषात् तथाहि सामान्यरूपेण सामान्यसंबंधेन वा व्याप्तिग्रहे सामान्यघटितेन विशेषरूपेण विशेषसंधेन वा पक्षधर्मता ज्ञानादनुमिति र्युज्यते हेतो स्तत्संबंधस्य वा संकोचे व्याप्तेरव्याघातात्। सामान्यरूपेण सामान्यसंबंधेन वा सहचार ग्रहे विशेषरूपेण विशेषसंबंधेन वा पक्षधर्मताज्ञानेतु नसंशयः संकोचस्य साधारण्यव्याघातकत्वात् अतएव वन्हित्वादिना धूमतदभावादिसहचारग्रहे आर्द्रेंधनप्रभववन्हित्वादिना धर्मिवृत्तित्वज्ञाना न्नधूमादि संशयो नवा संयोगसामान्येन धूमतदभाव सहचरित वन्ह्यादि र्महानसाद्यनुयोगिक संयोगेन धर्मिणि ज्ञानात् तत्संशयः नच तत्रसाधारण्यप्रसंगइति अथ द्रव्यंगुणकर्मान्यत्वे सति सत्वादित्यत्र सद्धेतौ। द्रव्यंगुणत्वेसातिसत्वादित्यत्र विरुद्धे चातिं व्याप्तिः विशेष्ये साध्यतदभावोभयसामानाधिकरण्यसत्वेन विशिष्टेपि तत्सत्वा दितिचेन्न साध्यतदभाववद्वृत्तितावच्छेदकविशिष्टवत्ताज्ञानस्यैव ⌀साधारणधर्मदर्शनविधया साध्यसंदेहजनकत्वात् यत्किंचित्साध्यसंशयजनकतावच्छेदकीभूता याया प्रकारतावच्छेदकता तदवच्छेदकतापर्य्याप्त्यधिकरणधर्मविशिष्ट प्रकृतहेतुतावच्छेदकत्वविवक्षणे नातिप्रसंगविरहात् विशिष्टसत्तात्वरूप प्रकृतहेतुतावच्छेदकस्यो भयवद्वृत्तितावच्छेदकत्वविरहात् °उभयसहचरितवृत्तित्वावच्छिन्न प्रकारतावच्छेदकताकज्ञानस्य संशायकत्वेपि नोक्तातिप्रसंगः तथासति यादृशयादृशधर्मावच्छिन्न प्रकृतहेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहि ज्ञानत्वेन यत्किंचित् साध्यसंशयजनकता तादृश तादृश २०

° उभयसहचरितवृत्तिधर्मवत्वा नित्याकारकस्य)

३४ब

⌀ अधिक न्तुप्रविष्टं नत् तद्धानि रितिन्यायात्॥

⌀ साधारणधर्मज्ञानमुद्र्या

रूपविशिष्ट तद्वत्वस्य विवक्षणीयत्वात् यत्रोभयसहचारिततद्वृत्तित्वं प्रकारतावच्छेदकेभासते तत्र तदुपलक्षिततद्वत्ता ज्ञानस्यापि हेतुतया तद्विशिष्टवैशिष्ट्यावगाहित्वेनाऽजनकत्वात् उभयवद्वृत्तितावच्छेदकत्वेन प्रकारतावच्छेदकस्य यत्र भानं तत्रोभयसहचारघटकतदवच्छिन्नप्रकारतानिरूपिताधिकरणतावगाहिज्ञानस्यैव हेतुतया तद्विशिष्टवैशिष्ट्यावगाहित्वेन हेतुत्वमावश्यक मिति तादृश हेतुतामादाय साधारणे उभयवद्वृत्तितानवच्छेदकविशिष्टवैशिष्ट्यबोधत्वेन हेतुता मादायवा साधारणे लक्षणं संगमनीयं प्रकृतपक्ष धर्मताज्ञानानिवेशे घटज्ञानं सविषयकं आत्मवृत्तिवाज्ञानत्वादित्यादावतिव्याप्ति स्तथाहि घटज्ञानं सविषयक मित्यादि निश्चय कालीन घटज्ञानं सविषयं नवेत्यादिसंशयंप्रति घटज्ञानधर्मिक सविषयकत्वज्ञानं प्रमानवेत्याद्याकारकसंशयोहेतुः। अर्थनिश्चयोत्तरार्थसंशये तद्धर्मिक प्रामाण्यसंशयस्य हेतुत्वात् सच प्रामाण्यसंशयः सविषयत्वतदभावादिरूपकोटिद्वयोपस्थित्यात्मकः सविषयकत्ववति सविषयकत्वप्रकारकरूपप्रामाण्यस्य सविषयकत्वेन तदभाववति तत्प्रकारकत्वरूपाया प्रामाण्यस्यच तदभावेनघटितत्वात्। तादृशप्रामाण्यसंशयेच सविषयकत्वादिज्ञानधर्मिक प्रामाण्याप्रामाण्य सहचरितज्ञानत्वादिमत्ताज्ञानं हेतुरिति सविषयकत्वादिरूप साध्यसंदेहजनककोटिद्वयोपस्थितिजनकधर्मिवृत्तिताज्ञानविषयत्वं ज्ञानत्वादा वक्षत मेवेति प्रकृतपक्षधर्मताज्ञाननिवेश आवश्यक स्तन्निवेशेच सविषयकत्वादिज्ञानधर्मिकज्ञानत्व वत्ताज्ञानस्य तादृशज्ञानविषयघट ज्ञानादिरूपप्रकृतपक्ष धर्मत्वाविषयकत्वा न्नातिव्याप्तिरिति मिश्रमतं दूषयति (१)इदंसविषयकमिति। सविषयकत्वस्य स्वरूपसंबंधात्मकत्वेना ननुगत-

(१) टिप्पणी—अत्रा पीदं चिंत्यते स विषयकत्व प्रकारक ज्ञानत्वा वच्छेदेन सविषयकत्वस्य साध्यत्वे ज्ञानत्वादि हेतावति व्याप्तिः तादृश धर्मावच्छिन्न विशेष्यक सविषयकत्व संशय जनक प्रामाण्या प्रमाण्यो पस्थित्या त्मक तदुभय संशय जनक निरुक्त धर्मा वच्छिन्न विशेष्यक ज्ञान विषयत्वस्य ज्ञानत्वे ऽक्षतत्वात्॥

तया तस्मिन् साध्येज्ञानत्वादिकं व्यभिचार्य्यं वेत्यतआह आत्मवृत्तिवेति अप्रामाण्यं भ्रमत्वं नतु प्रमात्वाभाव एतस्य साध्याभावाघटितत्वात् तज्जन्यकोट्युपस्तितेर्वेति मतभेदेन तज्ज्ञानस्य प्रामाण्याप्रामाण्यसहचरितज्ञानत्ववत्ताज्ञानस्य तादृशसंशयाहेतुत्वात् सविषयकत्वादि संशयजनककोटिद्वयोपस्थित्यहेतुत्वात् प्रामाण्यसंशयात्मककोटिद्वयोपस्थितिजनकत्वेपि प्रामाण्यसंशयस्य कथितार्थसंशयहेतुताया अप्रामाणिकतया तादृशकोट्युपस्थितेः साध्यसंशयाहेतुत्वादितिभावः ननु विनापि साधारणादिधर्मज्ञानं प्रामाण्यसंशयस्थले विषयसंशयोदयात् साधारणादिधर्मवत् प्रामाण्यसंशयस्य संशयजनकत्व मावश्यक मित्यत आह प्रामाण्यसंशयेति ज्ञानत्वलक्षणसमानधर्मदर्शनात् प्रामाण्याप्रामाण्यसहचरितज्ञानत्ववत्ता ज्ञानात् प्रामाण्यस्य संदेह इति योजना एतच्च दृष्टांत विधयोक्तं ज्ञानविषयतात्मकसाधारणधर्मदर्शनात् तत्प्रकारकज्ञानविशेष्यत्वरूपतत्तदभावसहचरितधर्मवत्ताज्ञानात् विषये घटज्ञानादौ तद्वत्त्वस्य सविषयकत्वादेः संदेहः तादृशधर्मवत्ताज्ञानासत्वे च संशयो ऽसिद्धएवेति भावः नन्वेवमर्थ निश्चयदशायां सत्यपि साधारणादिधर्मज्ञाने प्रामाण्यसंशये ऽर्थसंशयः असतितु तस्मिन्ने त्यन्वयव्यतिरेकानुविधानं नोपपद्यत इत्यत आह अप्रामाण्यसंशयेति तदपसारणप्रयुक्तं तादृशविशिष्टप्रतिबंधकाभावसंपादकत्वनिबंधनं तथाच प्रयोजकत्वेनैवान्वयव्यतिरेकानुविधानोपपत्ते र्नतत्कारणता साधक मितिभावः व्याप्यसंशयस्येति व्याप्यतदभावयो र्व्यापकतदभाव सहचरिततया साधारणधर्मदर्शनविधयैव व्याप्यसंशयो व्यापकसंशयहेतुः धर्मस्यैकताया ज्ञानस्य निश्चयताया अप्रयोजकत्वात् यदाच व्याप्याभावस्य व्यापकाभावसाहचर्य्यन्न प्रतिसंधत्ते तदा धर्मिणितद्व्याप्यधर्मं संशयानोपि न तं सांदिग्ध इति स्वीयमते(१) साध्यसंशयजनकतावच्छेदकप्रकारतावच्छेदक साध्याभाववद्वृत्तित्वस्य व्याप्ये ऽसत्वेनातिव्याप्त्यनवकाशात् पृथगिति हेतुत्वविशेष-

(१) टिप्पणी—इति व्यापक संशयं प्रति व्याप्य संशयस्य हेतुता वादि मते ॥

सू२

णं पृथक्कारणतामते व्याप्ति मादायातिव्याप्तिः (१)प्रागेवोपपादिता ज्ञानपदं निश्चयपरमिति तादृशजनकतायां निश्चयत्वावच्छिन्नत्वं संशयत्व+न्यूनवृत्तित्वंवा (२) विशेषणं देयमित्यर्थः सद्धेतावतिव्याप्ते र्वास्तवसाधारण्यादि मत्वाभावेना प्रसक्ते र्हेत्वभिमतपदोपादान मनर्थक मित्याशंकायामाह हेत्विति तेन संबंधेन सव्यभिचारत्वं घटकतयाभिमतसंबंधेन जनकतासूचनार्थं जनकताया लक्षणघटकता लाभार्थं तथाच तादृशपदोपादानस्वरसाद् यादृशरूपावच्छिन्न यत्संबंधावच्छिन्न प्रकारताशालिज्ञानं साध्यसंदेहजनकं तादृशरूपवां स्तेनसंबंधेन सव्यभिचार इत्येव लक्षणं कर्त्तव्यमितिभावः समवायेनहेतौ समवायेनव्याप्ये एतेनालक्ष्यत्वं दर्शितं ज्ञानघटादौ नातिप्रसंग इति योजना नसमवायेन सव्यभिचारत्वप्रसंग इत्यर्थः अतिप्रसंगप्रसंजकं विशेषणमाह विषयत्वसंयोगादिना तत्संदेहजनक इति विषयत्वसंयोगादिसंसर्गघटित साध्यतदभावसाहचर्य्यप्रकारेण तादृशसंबंधेन स्वप्रकारकं यत्संशयजनकंज्ञानं तद्विषयइत्यर्थः नच तेन संबंधेन तद्वत्ताज्ञानस्य लक्षणघटकत्वेपि समवायेन विषयता संयोगादिघटित कोटिद्वयसामानाधिकरण्यावच्छिन्नज्ञानघटादि प्रकारकज्ञान मादायाति प्रसंगइति वाच्यम् तेनसंबंधेन तद्वत्ताज्ञानस्य तत्संबंधघटिततत्सहचारविषयकस्यैव संशयजनकतया समवायसंबंधावच्छिन्नायां संशयजनकतावच्छेदकप्रकारतायां, समवायसंबंधघटित साध्यतदभावसाहचर्य्यस्यैवा वच्छेदकतया तद्वत्ताया ज्ञानघटादावसत्वेना तिव्याप्त्यनवकाशात् विप्रतिपत्तिस्त्वित्यादिमूले तथापदस्य कोट्युपस्थापकपरत्वे ऽसंगति स्तद्घटक साध्यतदभावोपस्थापकपदयोः प्रत्येकं प्रत्येकोपस्थापकत्वात् प्रत्येकमतथात्वेपिवा कथंतत्र लक्षणासत्व मित्यपिनस्फुटमिति तद्ग्रंथ मधृत्वैव तदर्थं पूरयित्वा व्याचष्टे विप्रतिपत्तेरिति विप्रतिपत्ति

+विषयतासंयोगादिसंबंधेन

(१) टिप्पणी—व्याप्य वत्ता ज्ञानत्वेन व्याप्य संशयस्य हेतुता इति ॥

(२) टिप्पणी—लाघवा दाह संशयत्व शून्य वृत्तित्वे ति ॥

२ क्यप्रकारता ज्ञाति समूहालंबन ज्ञानस्य तु कोटिद्वयोपस्थापकत्वाभावात् नातिव्याप्तिरि त्यर्थः॥
१० तादृशवाक्यविषयक ज्ञानस्य समूहालंबन ज्ञानस्य। पक्षधर्मताज्ञानत्वाभावात्। तादृशवाक्य

घटकतत्तत्पदज्ञानस्येत्यर्थः तत्तत्पदविषयकप्रत्येकज्ञानयोः कोटिद्वयोपस्थापकत्व विरहेपि समूहालंबनज्ञानस्य तथात्वा त्तमा-
दायैवाति व्याप्ति र्भविष्यती त्याशंकायां नचा पक्षवृत्तिरिति मूलावतार इति सूचयितुं पूरणसंमिलितं । तदर्थ माह मिलित-
स्येति मिलितविषयकज्ञानस्येत्यर्थः तदुपस्थापकत्वेपि कोटिद्वयोपस्थापकत्वेपि तद्वत्ताज्ञानं तादृशवाक्यप्रकारताशालि ज्ञानत्वा
वच्छिन्नं तथा कोटिद्वयोपस्थापकं+। तथाच°पक्षधर्मतापदोपादानादेव न तत्रातिव्याप्तिरितिभावः पक्षधर्मतापदानुपादानेपि
नतत्रातिव्याप्तिः संभवति पदद्वय विषयकज्ञानस्य कोटिद्वयोपस्थितिजनकत्वेपि विषयभेदेन विषयताभेदा न्नित्यपद नञ्पद-
विषयतायाः प्रत्येकं कोटिद्वयोपस्थितिजनकतावच्छेदकत्व विरहा ल्लक्षणेच कोटिद्वयोपस्थितिजनकतावच्छेदकैक विषयताया
एव निवेशादित्याह नवेति मिलित्वा एकविषयताश्रयीभूयद्वयोः पदयो र्जनकत्वं जनकतावच्छेदकघटकत्वं कोटिद्वयोपस्थिति-
जनकतावच्छेदकीभूता या विषयता तदाश्रयत्व मितिपर्यवसितार्थः ननु विप्रतिपत्तिघटकपदानां प्रतिपाद्यत्वादिसंबंधेन कोटि-
द्वयसहचरिततया तेनसंबंधेन तद्वत्ताज्ञानस्य संशयहेतुत्वात् तेषां प्रत्येकं संदेहजनककोटिद्वयोपस्थितिजनकतावच्छेदकविषयता
श्रयत्व मक्षतमेवेत्यत आह तथात्वेपीति । विप्रतिपत्तिघटकपदानां प्रत्येकं तादृश विषयताश्रयत्वेपीत्यर्थः । अवश्यं
सव्यभिचारत्वमिति । तथाच लक्ष्यतयैव न तत्राति व्याप्तिरिति भावः। नन्व नुपसंहारीपक्षे एवेति मूलमसंगतं। संबं-
धनिश्चयस्यैव संबंधिस्मारकतया पक्षे साध्यस्य तदभावस्यच संदिग्धतया तदंतर्भावेन हेतौ तत्सामानाधिकरण्यस्य निश्चेतु मश-
क्यत्वेन हेतोः कोटिद्वयोपस्थापकत्वासंभवा दतो ऽभिप्रायंव्याचष्टे ऽनुपसंहारीति । अनुपसंहारितादशायां । पक्षे साध्यसंदेह-
दशायां उक्तक्रमेण लक्षणसमन्वय इतियोजना। यद्रूप विशिष्टवत्ताज्ञानं साध्यसंदेहजनकं वास्तव तद्रूपवत्त्वस्यैव लक्षणार्थतयो-
पवर्णितत्वात्। सर्वमनित्यं प्रमेयत्त्वादित्यादौ पक्षएव क्वचित्साध्यस्य क्वचिच्च साध्याभावस्य निश्चयदशायां नित्यत्वतदभावसह- २२

नेत्यर्थः

प्रत्येकि
एतादृश
त्वेनोपरि
॥पृ१३।पं
११-१

क्व

०पक्षेसाध्यसंदेहाभावदशायामित्यर्थः।

१ज्ञानस्यलक्षणे उपलक्षणविधया निवेशनीयतयाकालान्तरीयज्ञ

चरितप्रमेयत्ववत् सर्वमित्यादिज्ञानस्य संभवेन तद्विषयतावच्छेदको भयसाहचर्य्य मादाय साध्यसंदेहदशाया मपि लक्षणसमन्वयइत्यर्थः।०अनुपसंहारितोत्तीर्णतादशायां तदुभयसाहचर्य्यसत्त्वेपि तदानीं तादृशहेतो स्साधारणतया नसामान्यलक्षणातिव्याप्ति रितिभावः। साधारण्यविषयकज्ञानत्वावच्छिन्नस्यैव संशयान्वयव्यतिरेकानुविधायित्वात् तेन रूपेण संशयहेतुता न तु तद्विषयकनिश्चयत्वेन तदवच्छिन्नस्या न्वयव्यतिरेकानुविधायिताया असिद्धत्वात् तथाच साध्यसंशयकाले साहचर्य्यनिश्चयासंभवेपि तदंशे संशयात्मक संशयजनकज्ञानं मादायलक्षणसमन्वयः संभवतीति केचिदाहुः। तन्मतमुपन्यस्यति। केचित्त्विति वस्तुतो वस्तुगत्या यत्साधारणं तज्ज्ञानेपि तत्रतद्धेतुतायां अकिंचित्करं अनवच्छेदकं पक्षेएवं पक्षान्तर्भाविन्नैव। तत्संशयेति। साहचर्य्यांशे संशयेत्यर्थः साहचर्य्यज्ञानात् साहचर्य्यविशिष्टप्रकारकज्ञानात्। तथात्त्वं सव्यभिचारत्त्वं। तच्चिंत्यमिति संबंधांशे निश्चयात्मकं संबंधिज्ञानं संबंध्यंतरस्मारकं शक्त्यादिसंशयात् पदार्थस्मरणा द्यनुत्पत्ते रिति। साधारण्यसंशये कोट्युपस्थापकत्वं न संभवति। एवं संशयसाधारणसहचारज्ञानस्य हेतुत्वे अप्रामाण्यनिश्चयानास्कंदितत्व मेवावच्छेदककोटौनिवेशनीयं तन्निश्चयत्वेन हेतुत्वेतु अप्रामाण्यज्ञानानास्कंदितत्वमेवेति लाघवात् संशयात्मकसहचारज्ञानं न हेतु रेव मनुपसंहारितादशायां संशयजनकज्ञानसंपादनंप्रयासोपि विफलः। तादृशज्ञानासत्त्वदशायां साधारणाव्याप्तिभयेन तादृशज्ञानस्यो पलक्षणविधयैव लक्षणघटकत्वादित्यादिचिंतावीज मूहनीयं(केवलान्वयीत्यादि मूलमवतारयति नन्वित्यादिना। अयंघटएतत्त्वादित्यादिस्थले पक्षतादशायां संशय प्रयोजक निश्चितसाध्यतदभाववद्व्यावृत्तत्वस्य सत्त्वादव्याप्त्यप्रसक्ते स्तस्यालक्ष्यतया ऽव्याप्तिपरिहारोपि न संगच्छत इत्यत स्तत्र निश्चितसाध्यवद्वृत्तित्वं संपादयति एवमिति हेतुभूतेदंत्ववति पूर्वं घटत्वग्रहेएव तन्मूलकात् सघटइत्याकारकस्मरणात् तद्घटत्वेनैव तद्घटभेदोत्र घटेगृहीतुं शक्यते नान्यथा प्रतियोगितावच्छेदकप्रकारक प्रतियोगिज्ञानाविरहा दिति

७ ०अप्रामाण्यनिश्चयत्वंचअप्रामाण्याभावाप्रकारकअप्रामाण्यप्रकारकज्ञानत्वं॥

साहचर्य्यांशे॥ +८अनित्यत्वंतदभावस इत्यरित प्रमेयत्वं वानित्या कारक

ज्ञानमादाय लक्षणसमन्वयइतिभावः

णे६ +

१तथाचकेवलान्वयिसाध्यकानुपसंहारित्वेणः सद्धेतुत्वान्नव्याप्तिरित्यर्थः

गादा० धर्मिणि पूर्वं घटत्वग्रहस्या नुसरणं। तद्घटभिन्नोयमिति भ्रमपर्य्यंतं तद्घटानवस्थाने तादृशभ्रमएव न संभवति। विशेष्य-
२३ विरहा दतः स्थिरइत्युक्तं। तद्घटभिन्नोयमिति भ्रमदशायां इदंत्वावच्छिन्ने घटत्वग्रहे इदंत्वस्य साध्यसहचारितत्वेन निश्चित-
तया ऽसाधारण्यं नशंकाऽस्यद मपीत्यतआह तत्रैवदोषाद्घटत्वाग्रहइति। तत्रइदंत्वावच्छिन्ने तदघटभिन्नोयमिति भ्रमानुधा-
वनं इदंत्वस्य निश्चितसाध्यवद्धर्मिव्यावृत्तत्वज्ञान संपादनाय तदाधर्मिणि घटत्वनिश्चयसत्वे एव संशयप्रयोजकस्य तत्कालीन ०संशयकालीन
तत्पुरुषीय साध्यनिश्चयविषय व्यावृत्तत्वस्येदंत्वे ऽसत्वमतः केवलतद्व्यक्तित्वेन प्रतियोगिविधया तद्घटभान मुपेक्ष्य तदघट-
त्वेन तद् भानानुसरणं तथासति तादृशभ्रमे एव तद्व्यक्तित्वे विशिष्टेधर्मिणि घटत्वस्य निश्चयइति तन्निष्ठेदंत्वे दर्शितसंशय-
७ति प्रयोजकरूपाभावा दव्याप्ति प्रसक्तिरिदं त्वविशिष्टे घटसामान्यभेदभ्रमे इदंत्वे विपक्षवृत्तित्वनिश्चय संभवात् तदव्यावृत्तत्वज्ञाना
संभवाद साधारण्यं नशंकाऽस्यदमपीति प्रतियोगिकोटौ तत्वभानानुधावनम्। इदंत्वेपीति। अव्याप्तिरित्यनुषज्यते वस्तुत
स्तद्व्यावृत्तत्वाभावेन वास्तविकस्य साध्यनिश्चयविषयीभूत धर्मिव्यावृत्तत्वस्या भावेन लक्षणायोगादिति वास्तवसंशय प्रयोजक
रूपवत्वस्यलक्षणघटकत्वादितिभावः अतएवेत्यत्रेदंपदेन पूर्वाभिहितायाः सद्धेतुत्वाज्ञानस्य पुरुषदोषतायाः परामर्शे ऽसंगतिः
तस्या असाधारण्यादे रनित्यदोषताया मनुपष्टंभकत्वा दतस्तत्परामर्शनीयं व्याचष्टे अतएवेति पुरुषदोषाधीनं पुरुषस्य हेतुम- शेर्६
तिपक्षेच साध्यतदभावानिश्चय साध्याभावव्याप्यवत्ताभ्रमाधीनं तद्दोषत्वं तादृशहेतो रसाधारण्य सत्प्रतिपक्ष रूपदोषवत्वं
तस्यासाधारण्यस्य सत्प्रतिपक्षस्य च अनित्यदोषत्वं दशाविशेष एव हेतोर्दुष्टता संपादकत्वं साहजिकदोषत्वे तादृशपुरुषदोष-
विरहदशाया मपि हेतोर्दुष्टतासंपादकत्वे कदाचित्कत्वं कदाचिदेवहेतोर्दुष्टता संपादकत्वम् एतावता ऽयंघटएतत्वादित्यादौ दशा
विशेषे पुरुषदोषाधीन दुष्टत्वशंकाया अनिवृत्ते स्तन्निवृत्यर्थं मन्वयेत्यादि ग्रंथसंगमनाय चाभिप्रायं पूरयति एवंचेति दोषता- २३
त्य२ त्य१ ०७तथापअयंघटएतत्वादित्यादा वव्याप्तिरितिभावः॥

प्रयोजकं निश्चित साध्यतदभाववद्व्यावृत्तित्वादिकं हेतौ तिष्ठतीति शेषः तत्रानित्यदोषत्वमपि अनित्यदोषमपितत्रैव भ्रमोदोषताप्रयोजकरूपस्य अन्यथा पदार्थंव्याचष्टे भ्रममात्रादिति तादृशरूपभ्रमादित्यर्थः केचिदित्यस्वरससूचनाय सच निश्चितसाध्यतदभाववद्व्यावृत्तत्वस्य संशयप्रयोजकताया अग्रेखंडनीयत्वाद ऽसाधारण्यादेः पुरुषदोषाधीनदोषतायाः (१) प्रकृतानुपयोगितया मूलानुक्ततया वा ऽतएवेत्यत्रेदंपदेन तत्परामर्शे संदर्भविरोधाच्चेति तस्यासाधारण्यस्य वृत्तिमतः ननु तादृशहेतोः संशयप्रयोजकरूपशून्यत्वे ऽसाधारण्यमेवकथं बीजाभावादित्यत आह असाधारण्यंत्विति अत इत्याशंकातः नन्वयं घटएतत्वादित्यादेरिव तुल्ययुक्त्या शब्दोऽनित्यः शब्दत्वादित्यादे रपि सद्धेतुत्वमेव शब्दो नित्यः शब्दत्वादित्यादिकमपि विरुद्धमेव नत्वसाधारणं साध्यसाध्याभाववद्व्यावृत्तत्वाभावा दित्युदाहरणाभावाद साधारणहेत्वाभासस्यैवा प्रसिद्धिरित्यत आह एवंचेति अवृत्तीति वृत्तिमतः साध्यतदभाववद्व्यावृत्तत्वा संभवादितिभावः ननु पक्षधर्मताज्ञानविरहादेव गगनादिहेतुकस्थले अनुमित्यनुत्पाद निर्वाहा दसाधारण्य ज्ञानस्या नुमित्यनुत्पाद प्रयोजकत्व मेव नास्तीति कथं तस्य हेत्वाभासतेत्यतआह पक्षवृत्तितेति असंकरइतरानधीनानुमित्यनुत्पादप्रयोजकज्ञानविषयत्वं ननू भयवद्व्यावृत्तत्वस्य वृत्तिमत्व विरुद्धतया तदुभयज्ञानस्य नैकदासंभवः मिथः प्रतिबंधकत्वात् नचैवं पक्षधर्मताज्ञानाभावसंपादकतयैव तस्य हेत्वाभासत्वं निष्प्रत्यूहं तथासत्य सिद्धावेवान्तर्भावेन्न सव्यभिचारप्रभेदत्वा नुपपत्ते रतआह नचोभयेति स्वरूपतोविरोधः परस्पराभावव्याप्यत्वाविशेषितयोः परस्पर ज्ञानप्रतिबंधकीभूत ज्ञानविषयत्वं वास्तव विरुद्धविषयकस्यापि ज्ञानस्य विरोधाविषयकस्या प्रतिबंधकत्वादितिभावः ननु निश्चितसाध्यतदभाववद्व्यावृ-

(१) टिप्पणी—यद्यपि तद ज्ञानं दोषः पुरुषस्ये ति। मूलेन पुरुष दोषा धीन दोषता भिहिता तस्या ऽनित्य दोषत्वा नुपष्टंभकत्वा त्तयो पष्टंभिका या हेतुने ति। साध्य तदभावा निश्चय पक्षे साध्याभाव व्याप्य वत्ता भ्रम रूपाया मूला पुक्तत्व मिति भावः॥

त्तव रूप संशय प्रयोजकधर्मस्यो क्तहेतौ सत्वा त्कथं तत्राव्याप्तिशंका कथंवा ऽलक्ष्यत्वाभ्युपगमेन तत्परीहारइत्यतआह निश्चितेति साध्यतदभाव निश्चयविषय वृत्तित्वस्य तथात्वे संशयप्रयोजकत्वे सद्धेतौ। वन्ह्याद्याधिकरणवृत्तितया निश्चिते धूमादौ धर्मिवृत्तित्व ग्रहदशापर्य्यन्तानुधावनं संशयजनकज्ञानस्य विशेषण विधया लक्षणघटकत्वे प्यतिव्याप्तिः संभवतीत्यभिप्रायेण वस्तुतो यदाहेतुमतिन्साध्याभावभ्रमोवर्त्तते तदा हेतौ तदधिकरणवृत्तित्वाग्रहेप्यतिव्याप्तिसंभवति तादृशज्ञानस्यो पलक्षणत्वादितिध्येयं। तादृशेति साध्यतदभावविषयकेत्यर्थः तंत्रं संशयप्रयोजकरूपघटकं किंचेति संदेहजनकतावच्छेदकरूपस्य जनक-तावच्छेदकप्रकारतावच्छेदकस्य विशेषणत्वे धर्मिविशेषणतयासव्यभिचारपदप्रतिपाद्यत्वे महानसादिवृत्तितादशायामव्याप्तिः तत्कालान्तर्भावेणा व्यभिचारित्व व्यवहारापत्तिः तदानीं साध्याभाववद्वृत्तित्वाभावस्य तत्रा क्षतत्वात् तादृशव्यवहारविषयस्या वाधित्वा दितिभावः नच द्रव्यंविशिष्टसत्त्वादित्यादा वतिव्यातिवारणाय साध्यसंदेहजनकतावच्छेदकप्रकारतावच्छेदकधर्मवत् प्रकृतहेतुतावच्छेदक वत्त्व मेव व्यभिचारपदार्थोवाच्यः साधारणस्थलेच तादृशोधर्मः साध्यतदभाववद्वृत्तितावच्छेदकत्व मेव तत्तद्विशिष्ट हेतुतावच्छेदकावच्छिन्नहेतुमत्ताज्ञानस्या पि संदेहजनकतोपगमात् एवंच रासभादेर्महानसादिवृत्तितादशायां वन्ह्यभाववद्वृत्तित्वविरहेपि तदवच्छेदकरासभत्वादिसत्त्वेन तादृशव्यभिचाराभावो नास्तीति कथमुक्त व्यवहारापत्ति रितिवाच्यम् एवमपि अनित्यधर्मस्य हेतुतावच्छेदकत्वे (१) तदसत्त्वदशाया मापत्ति तादवस्थ्यात् विशेषणत्वे कालविशेषावच्छिन्नतया तदानीं व्यभिचारीत्यादिव्यवहारविषयत्वे ऽव्याप्ति स्तत्कालांतर्भावेण दुष्टत्व व्यवहारानुपपत्तिरिति तुनार्थः। साधारण्यस्य नित्यदोषतया कालविशेषान्तर्भावेण व्यभिचारित्वव्यवहाराजनकतायाः तत्रेष्टत्वात्। उपलक्षणत्वे। अत्यन्तायोगव्यवच्छेदपरिचायकतया व्यभिचा-

(१) टिप्पणी—तदानी वंन्हि साधने रासभो दुष्टः इत्यादि व्यवहारा नुपपत्तिः॥

यद्दि पदप्रतिपाद्यत्वे । तादृशरूपात्यंतायोगव्यवच्छेदस्य तत्पदार्थत्वोपगम इतियावद्र् असाधारण्योत्तीर्णतादशायां हेतुमति साध्य-तदभावयो रन्यतरनिश्चयदशायां तत्कालान्तर्भावे णातिव्याप्तिः कालान्तरीय मसाधारण्यमादाय सव्यभिचारव्यवहारापत्ति रिदं-पुनरिहावधेयम् शब्दो ऽनित्यः शब्दत्वादित्यादौ पक्षतादशायां सव्यभिचारव्यवहारनियामकं यद्घटगगनादिव्यावृत्तत्वरूप मसाधारण्यं तच्छब्दादौ साध्यादिनिश्चयदशाया मक्षत मेवेति विशेषणत्वे प्येतद्दोषतावस्थ्यं॥अथ संशयप्रयोजकरूपस्य तथा-त्वेन न व्यभिचारपदप्रतिपाद्यता किंतु साध्यतदभाववद्वृत्तित्व निश्चितसाध्यतदभाववत्व्यावृत्तत्वरूपेणैव विभाजकमात्रमुक्ता नुगतंरूपं एवंच साधारण्य मुपलक्षण मसाधारण्यं विशेषण मित्यविरोधः निश्चयघटितरूपावच्छिन्नपरवाक्याच्च कालविशेषो निश्चयांश एवान्वेयीति साध्यतदभावनिश्चयादौ खंडशक्तिस्वीकारेणान्वयबलात् साध्यतदभावनिश्चयविषयवृत्तित्व सामान्याभाव-भिन्नस्यापि तत्कालीन तन्निश्चयविषयवृत्तित्वत्वावच्छिन्नाभावस्य लाभः व्यभिचारादिपदस्य साधारण्या साधारण्यादिरूप नाना-र्थत्व मिष्टमेवेति चेदुच्यते तदोपलक्षणत्वेपि नोक्तदोषावसरइति। एवंच निश्चयाघटितं साध्यतदभाववद्वृत्तत्वमेव संशयप्रयोजकं तदवच्छिन्नप्रकारकज्ञानस्य विशेषदर्शनतया संशयप्रतिबंधकत्वेपि तत्कोटिविशिष्टबुद्धौ तत्कोटिमद्व्यावृत्तत्वावच्छिन्नप्रकारक-ज्ञानप्रतिबंधकतायां विपरीत कोटिमद्व्यावृत्तत्वावच्छिन्नप्रकारकज्ञानस्यो त्तेजकतया सत्प्रातिपक्षस्थल इवसंशयनिर्वाहः। तथा-चायं घटएतत्वादित्यादौ साध्यतदभाववद्व्यावृत्तत्वस्या सत्वेनाव्याप्त्याशंकायां अलक्ष्यत्वा भ्युपगमेन तत्परीहारस्य च नासं-गति रिति समुदिततात्पर्य्यार्थः संशयप्रयोजकरूपंचेदानी मुपलक्षणविधयैव सव्यभिचारव्यवहारनियामकं अतो महानसादौ रासभादिवृत्तितादशायां नाव्याप्ति रसाधाणश्च हेतुः सर्वदैव तथेति नातिप्रसंगोपीतिध्येयम्। अदुष्टहेतो र्वास्तवासाधारणप्रक-रणसमत्वाभावाद साधारणप्रकरणसमयो रितिव्याचष्टे असाधारणेति भ्रमविषयस्य नव्यमते दोषत्वाभावा दनित्यदोषत्वमिति

व्याचष्टे विशेषेति प्रयोजकत्वं प्रयोजकज्ञानविषयत्वं अतएवे त्यत्रेदं पदार्थस्य सद्धेतौ: सर्वदा ऽदुष्टत्वस्य/ भ्रमविषयस्या नुमि-
त्यनुत्पादप्रयोजकताया मनुपष्टंभकतया तदुपष्टभ्यं पूरयति नत्विति तथाच यतएव सद्धेतु: सर्वदैवतथा नतुकदाचिदपि दुष्टल-
क्षणलक्ष्यो ऽतएव तत्स्थलीयानुमितिविरोधी यो भ्रमरूपो ग्रह स्तस्यानुमित्यनुत्पादप्रयोजकत्वेपि तद्विषयो नहेतुदोष: भ्रमद-
शायां संद्धेतो र्दुष्टत्वे भ्रमविषयस्यदोषत्व मावश्यकं स्यादित्यतएवेत्यादि मूलस्य पर्य्यवसितो ऽर्थ: ननु भ्रमस्या नुमित्यनुत्पाद
प्रयोजकत्वे तद्विषयस्य दोषत्वमपीष्यत एवेति भ्रमविषयोनदोष इत्येवासिद्ध मित्याशंकाया मन्यथेत्यादि मूलावतारएतादृश-
शंकोद्धारं स्फुटीचिकीर्षु रन्यथापदंव्याचष्टे अन्यथेति मूले वाधादिज्ञानइति पक्षविशेष्यक साध्याभावादिभ्रमदशायामित्यर्थ:
हेत्वाभासाधिक्यापत्ति: अतिरिक्तहेत्वाभास स्वीकारापत्ति: बाधादे ^०^ र्नित्यदोषतायाः सर्ववादिसिद्धतया भ्रमविषयस्य तदन्त-
र्भावासंभवादितिभाव:॥अभेदे साध्ये प्रमेयत्वस्या नित्यत्वे साध्ये शद्बाकाशान्यतरत्वस्यच वास्तव साध्यवद्वृत्तित्वविरहेण विरु-
द्धत्वा संभवा त्प्राचीनमताभिप्रायकतया तयो र्विरुद्धत्वोक्ति मुपपादयति दीधित्तौ अनवगतेति एवंच साध्यवद्वृत्तित्वेनेति मूलस्य
साध्यवद्वृत्तितया अनवगतत्वेनेत्यर्थ: ननु तादृशस्थले पक्षतादशायां हेतौ साध्यतदभावोभयसहचारस्या शक्यनिर्णयत्वेपि
कालान्तरीय तन्निर्णयविषय वास्तवतदुभयसहचार मादाय लक्षण गमन संभवा दलक्ष्यतया ऽव्याप्तिपरिहारो न घटत इत्यत-
आह अभ्युपगमेति संशयजनकपक्षधर्मताज्ञानस्य विशेषणविधया लक्षणकंटकत्व मभ्युपगमेत्यर्थ: यथाश्रुतलक्षणे व्यात्प्यादि-
ग्रहदशायां सद्धेतौ अतिव्याप्तिवारणाय तादृशज्ञानं विशेषणविधयैव निवेशनीयं तादृशज्ञानदशायां अतिप्रसंग श्चास्त्येव (१) तत्र
तादृशज्ञानविरहदशायां चा गत्या साधारणस्यापि सव्यभिचारत्वं नोपगंतव्य मेवेत्यतउपवर्णितेति यथाव्याख्यातेत्यर्थ: अनु-

(१) टिप्पणी—मूलोक्त प्रमेयत्वे तादृशा न्यतरत्वा दाविति शेष: ॥

८० अनुमित्यनुत्पादप्रयोजकोयो पर्वतोवन्ह्यभाववान्नित्याकारकोभ्रमरूपोग्रह: तद्विषयविशिष्टस्याप्रसिध्या बाधस्याप्यनन्तर्भूतत्वं संभवति। तथापि तद्विषयप्रत्येक पदार्थस्यप्रसिद्धतया। तस्मिन् अनुमित्यनुत्पादप्रयोजकभ्रमरूप ज्ञानविषयत्वात्तस्यैवबाधत्वमित्यत आह नित्येति॥

७ वद्वृ
८ द्वृ६
त्व्या ३
न्ये ३
५ पृ३ पं४
२५

मित्यविरोधिज्ञानविषयस्यापि हेत्वाभासविभाजकत्वे क्षतिविरहात् एत(दृशे)ज्ञानेपीत्यादिनो (१) क्तविभाजकधर्मज्ञानस्या नुमित्य विरोधित्वकथन मकिंत्कर मित्याशंकामभिप्रायो पदर्शनेन निराकुरुते यद्रूपज्ञानमिति यद्रूपावच्छिन्नविषयकज्ञानमित्यर्थ : तदेव तद्रूपावच्छिन्नमेव एतेन निरुक्तपक्षधर्मताज्ञान विषयतावच्छेदकधर्मवत्वस्यैव विभाजकतया साधारण्यादिरूप तादृशधर्मविष- यकज्ञानस्य चा नुमितिविरोधितया तादृशानियमोपगमेपि तथाविधधर्मस्य न विभाजकत्वानुपपत्ति रितिपरास्तं साधारण्यत्वा- दिनैव साधारण्यादिज्ञानस्य विरोधितया तादृशपक्षधर्मताज्ञान विषयतावच्छेदकत्वेन तस्य विभाजकत्वानुपपत्तेः एवंचै तद- ज्ञानेपीति मूलस्य निरुक्तविभाजकतावच्छेदकावच्छिन्नाज्ञानेपीत्यर्थः साधारण्यादिप्रत्येकस्येत्यस्य साधारण्यत्वादिरूप प्रत्येक धर्म्मावच्छिन्नस्ये त्यर्थ इत्यवधेयं अन्यथा (२)तादृशरूपावच्छिन्नस्यापि विभाजकत्वे अतिप्रसंगः। अनुमितिकारणीभूतज्ञानवि- रोधि धर्मवत्वादिना अन्यतमधर्मवत्वादिनावा सव्यभिचारविरुद्धादीनामैक्यप्रसंगः मूले प्रतिबंधादित्यस्य निरुक्तसामान्यधर्म ज्ञानस्या प्रतिबंधकत्वा दितिशेषः तस्यैव दोषत्वा दित्यस्य प्रत्येकधर्मस्यैव विरोधित्वादित्यर्थः (३)तत्रैव(यं)हेतुरिति नसत् दोषत्वाच्चे- ति चकारासंगतेः तस्यैव दोषत्वा च्चेत्यस्य प्रथमतः तस्यैव दोषतयाउद्भावयितुमुचितत्वात्। नतु अनुगतधर्मस्येत्यर्थः एवंच दोष- विधया यादृशधर्मोभ्दाव्यते सएव विभाजकः उक्तानुगतधर्मस्यच दोषविधया ऽनुभ्दावनीय तया नतथात्वमिति हृदयं ननु तदज्ञानदशायां अन्यज्ञाना दनुमिति प्रतिबंधस्य तज्ज्ञानीयानुमित्यविरोधिता बीजत्वं मणिकृता ऽभिहितं नघटते तथासति तु०४

धर ^प्रतिबंधादित्यंतेनायं४

(१) टिप्पणी—सव्यभिचार सामान्य लक्षणं ज्ञानस्य ॥

(२) टिप्पणी—यादृश धर्मा वच्छिन्न विषयक ज्ञानस्या नुमित्य प्रतिबंधकत्वं ॥

(३) टिप्पणी—तत्र सामान्य धर्म ज्ञानस्या प्रतिबंधकत्वे अयं अस्यैव दोषत्वा दित्यादिः

गादा० २६ दी २ सत्प्रतिपक्षादिज्ञानस्या नुमितिविरोधितया वाधादिज्ञानस्या प्यतथात्वापत्तेः अतः स्वयं तद्बीजमाहवस्तुतास्त्विति उपस्थापकत्वा द्विति कोटिद्वयोपस्थापकज्ञानविषयत्वादित्यर्थः आदिपदा त्स्वयंनिष्कर्षिततादृशज्ञानविषयतावच्छेदक रूपवत्वपरिग्रहः विरोधिवि-
षयकत्वा भावात् ग्राह्यनिरूपितप्रतियोगितावच्छेदकावछिन्न तद्व्याप्यत्वावच्छिन्ना विषयकत्वात् इदंत्ववधेयं मूलेप्रतिबंधा दित्यनं
४ न तरं मानाभावे तु निरुक्तधर्मज्ञानस्या नुमित्यप्रतिबंधकत्वादितिशेषः एवंच प्रत्येकज्ञानस्यानुमितिप्रतिबंधकत्वं नानुगतधर्म ज्ञान-
स्यानुमित्यप्रति बंधकता संपादकतया मूलेऽभिहितं किंतु तथात्वेत्र प्रमाणाभावे कथिते अनंतरं प्रत्येकं नानाधर्मज्ञानस्या नुमिति
विरोधित्वकल्पनानापेक्षयाविरोध्यविषयकस्यापि अनुगतधर्मज्ञानस्यैकस्य तथात्वं विशेषदर्शिनां साधरणादि हेतुकानुमिति वारणाय
कल्पयितु मुचितमित्याशंकावतारात्त त्परिजिहीर्षया प्रत्येकज्ञानस्या वश्यकल्पनीय प्रतिबंधकताकत्वं दोषत्वाच्चे त्यंते नाभिहित
८ मे मिति एवंतादृश युक्ते तैरत्रापि निर्वक्ष्यमाणानुगतधर्मांतरे प्यनुमिति विरोधिज्ञानाविषयत्वं बोध्यमितिशेषः विरोधिपदस्य
७ ता प्रतिबंधकार्थकत्वे ऽसंगतिः साधारण्यादेर तथात्वादतो व्याचष्टे विरोधित्वामिति विरोधिज्ञानेतिप्रतिबंधकीभूतज्ञाने त्यर्थ अनु-
मिति विरोधि संबंधनिवेशेनैवोपपत्तौ अव्यावृत्तिपदमनर्थकामित्याशंकांनिराचिकीर्षु स्तस्य व्यभिचारिणी साध्याभाववद्वृत्ति-
त्वादिविरहदशायां अव्याप्तिवारकतया सार्थकतायाः संपादनायतद्व्याचष्टे अव्यावृत्तीति अत्यंतायोगः प्रतियोगिवैयधिकरण्याव-
च्छिन्नो ऽभावः नातिप्रसंग इति रासभादौ महानसादि वृत्तितादशायां वन्ह्यभाववद्वृत्तित्वासत्वेपि प्रतियोगिवैयधिकरण्या-
वच्छिन्नतदभावस्य तत्रासत्वेन तद्व्यवच्छेदस्य तदानीमपि सत्वादितिभावः नचा व्यावृत्तिपदस्या त्यंतायोगव्यवच्छेदार्थकत्वे
शब्दो ऽनित्यः शब्दत्वादित्यादाव साधारण्योतीर्णतादशायां अतिप्रसंग इत्यतआह साध्यवद्वृत्तित्विति नासाधारण इति निश्च-
यागर्भितस्य साध्यतदभाव वद्व्यावृत्तत्वस्यैवा साधारण्य पदार्थत्वा दितिशेषः तथाचो क्तस्थले कदाचिदपि असाधारण्यस्या २६

(१) टिप्पणी—पक्ष धर्मिक साध्य तदव्याप्य हेतुमत्वा वगाहि निष्ठ प्रतिबध्यता निरूपित प्रतिबंधकता वच्छेदक विषयता निरूपकत्व मादाय असाधारण्यादौ दोषः स्यात् अतः सामान्येति। साध्य व्यापकीभूता भाव प्रति योगित्व रूपा साधारण्य संग्रहाय तादृश विषयतायां स्वरूप संबंध रूपा वच्छेदकत्वं परित्यक्तं ॥

सत्वा न्नाति प्रसंग इतिभावः वाधादिवारणाय विवक्षणीयस्य पक्षे साध्यवैशिष्ट्यग्रहाविरोधित्वस्य लाभाय पक्षपदं व्याचष्टे पक्ष इति संदिग्धसाध्यः संदिग्धसाध्यविशिष्टः धर्मी पक्षतावच्छेदका वच्छिन्नः विशिष्टहेतौ हेतुतावच्छेदकावच्छिन्ने तद्वृत्तित्वेति तादृश साध्य विशिष्टपक्षतावच्छेदकावच्छिन्न पक्षवृत्तित्वेत्यर्थः वैशिष्ट्यंच वैज्ञानिकं तेन वाधादि संकरस्थले[१] साध्यविशिष्टपक्षा प्रसिद्धावपि नक्षतिः बाधादिज्ञानस्य साध्यविशिष्ट पक्षतावच्छेदकावच्छिन्न विषयक ज्ञानविरोधित्वा न्नबाधादिक मादाय न्हदोवन्हिमान् धूमादि त्यादाव तिव्याप्ति रिति भावः अत्रच साध्यवदवृत्तित्वरूपासाधारण्यस्या संग्रहः तज्ज्ञानदशायां हेतौ साध्यविशिष्टपक्षवृत्तित्वज्ञानानुदयात्। एवं साध्यांशे संशयविषयत्वरूपविशेषण मनर्थक मित्यत स्तत्परित्यज्य निष्कृष्टार्थ माह तथा चेति पक्षतावच्छेदकेति पक्षतावच्छेदकावच्छिन्न पक्षविशेष्यता निरूपिता या साध्यतावच्छेदकावच्छिन्न साध्यप्रकारता या च तादृशी हेतुतावच्छेदकावच्छिन्न हेतुप्रकारता तन्निरूपक (१) लौकिकसंनिकर्षाद्यजन्य ज्ञानाविरोधित्वस्य लाभादित्यर्थः (२) तादृशज्ञानाविरोधित्वं नतादृशज्ञानसामान्यनिरूपित प्रतिबंधकतानतिरिक्तवृत्तिविषयित्वा निरूपकत्वं हेतुमन्निष्ठसाध्याभावादिरूप व्यभिचारस्यापि पक्षनिष्ठसाध्याभावत्वादिना बुद्धेस्तादृशज्ञानंप्रति प्रतिबंधकत्वा त्तादृशविषयितानिरूपकत्वे

[१] ह्रदो धूमवान् वन्हेः

(२) टिप्पणी—असंकीर्णबाधस्य संख पीत इत्यादि स्थलीय बाधस्य संग्रहाय लौकिकेति। [२]

गादा०
२७

(१) टिप्पणी—अथात्र तादृश यत् किंचित् ज्ञान निरूपित प्रति बंधकता नतिरिक्त वृत्ति विषयता निरूपकता नवच्छेदकत्व निवेशे नैव बाधादौ व्याप्त्य विषयक ज्ञान मादाय व्यभिचारादौ चातिव्याप्त्यो र्वारण संभवे सामान्य पदं व्यर्थमिति चैन्न यत्र व्यभिचारज्ञानप्रतिबंधकाभावो वृत्तित्वाभाववान वृत्तित्वं निरूपितत्वाभाववत् इत्याद्येकतर ज्ञानविषयकमेव साध्यवान् पक्षः हेतुमान् इति ज्ञानं जायते। तत्र व्यभिचारे अव्याप्त्यापत्तेः व्यभिचारज्ञानस्य तादृश-यत् किंचित् ज्ञाननिरूपितप्रतिबंधकत्वात्। तन्निवेशे च व्यभिचारज्ञानप्रतिबंध कस्या पि प्रतिबंधकताया स्तादृश ग्रहत्वव्यापकत्वविरहा न्नाव्याप्तिः। ननु तथापि तादृश ग्रहत्वव्यापक प्रतिबध्यतानिरूपित प्रतिबंधकत्वाभाववद वृत्तित्वमेव लक्ष्यतावच्छेदकविषयितायां प्रवेशे बाधादा वतिप्रसंगवारणसंभवा दलंनञ्द्वयप्र-

ना संभवःस्यात् (१)किंतु तादृशविषयितानिरूपकतानवच्छेदक धर्मवत्वं तदनवच्छेदकत्वं च तदवच्छेदकतापर्य्याप्त्यधिकरणत्वं न १
तेन हेतु मन्निष्ठ साध्याभावत्वादे स्तादृशप्रतिबंधकता नतिरिक्तवृत्ति विषयिता निरूपकतावच्छेदक पक्षनिष्ठ साध्याभावत्वा-दितो ऽनतिरिक्तत्वेपि नक्षतिः बाधादि निष्ठाना मनुमिति विरोधितानवच्छेदकधर्माणां प्रमेयत्वादीनां तादृशाविषयिता निरूप-कतानवच्छेदकत्वेपि तादृशविषयितानिरूपकता नवच्छेदकीभूतानुमिति विरोधिता वच्छेदक रूपावच्छिन्नत्वस्य समुदायार्थत्वा न्नाति प्रसंगः तादृश यत्किंचि(०)ज्ज्ञानं यादृश रूपावच्छिन्न विषयकनिश्चय सामान्या प्रतिबध्यं तादृशो ऽनुमिति विरोधिता

वेशे नेति चेन्न। यत्र बाधस्वरूपासिद्ध्याद्ये कतर विषयकमेव व्यभिचारविषयकबोधो जायते तत्रत्यव्यभिचारेऽव्याप्तिः बाधस्वरूपासिद्धादे रेकतरविषयकव्याभि-चारज्ञाने साध्यवत् पक्षधर्मिकहेतुमत्ता ज्ञानत्वव्यापकप्रतिबध्यतानिरूपित प्रतिबंधकत्वा भावासत्वात्। नच नञ्द्वय प्रवेशे पि तत्रा व्याप्तिः दुर्वारैवे ति वाच्यम् तादृश प्रतिबंधकतानिरूपित स्वरूप संबंधरूपावच्छेदकतावति या तादृश प्रतिबंधकतानातिरिक्त वृत्तिविषयतातन्निरूपकतानवच्छेदकत्वस्य लक्ष्यतावच्छेदके निवेश-नीयत्वात् स्वरूपासिद्धाद्ये कतर विषयकव्यभिचार ज्ञानीयविषयिताया तादृश प्रतिबंधकता नतिरिक्त वृत्तित्वसत्वेपि तन्नि रूपित स्वरूपसंबंधरूपावच्छेदकत्ववि-रहात्। नाव्याप्त्य तिव्याप्ति इति ध्येयं।०पृ४।पं५।

२७

(१) टिप्पणी—अथा त्र साध्यवत् पक्षधर्मिकहेतुमत्ताग्रहत्व व्यापकप्रतिबध्यतानिरूपित प्रतिबंधकताभिन्न प्रकृता नुमिति विरोधितावच्छेदक विषयितानिरूपकतावच्छेदकत्वनिवेशे नैव सर्वसामंजस्ये गुरुतर निवेशनंव्यर्थ मिति चेन्न। एत दपेक्षयापि लघुतर निवेशनं अनुमिति विरोधिता घटकप्रतिबध्यताया मेव तादृश बुद्धित्वव्यापकत्वम् निवेश्यं इत्यादिना भट्टाचार्येणोक्तं तथाचोक्त पूर्वपक्षस्या किंचित् करत्वात् तन्नच्च त द्वीत्यानिवेशे लाघवान वकाशा दिति निपुणतर विभावनीयं।

^ज्ञानाविरोधित्वं॥ ०अनुमिति॥+तादृश

यो वच्छेदको^धर्म स्तदवच्छिन्नत्वं वासमुदायार्थः (१)वस्तु तस्तु निरुक्त^(तादृश ज्ञान) विरोधिनि ज्ञानविरोधितानवच्छेदकत्वं वाऽनुमिति विरोधिता वच्छेदके न निवेशनीयं परंत्व नुमिति विरोधिता घटकानुमिति निष्ठप्रति वध्यताया मेव तादृश ज्ञानत्व न्यूनवृत्तित्वं निवेशनीयं लाघवात् बाधादि ज्ञाननिरूपितप्रतिबध्यतानां च तादृश सकल ज्ञान साधारणतया न तादृशज्ञानत्व न्यूनवृत्तित्व मतो नाति प्रसंगः व्यभिचारज्ञानप्रति बध्यत्वं च तन्न्यूनवृत्ति व्याप्त्य विषयक तादृशज्ञानावृत्तित्वात् अग्रेपि सर्वत्रै वैतादृश दिशानिष्कर्षणीय मिति अत्र च (२)यत्र प्रकृतपक्षे व्यभिचाराभावो^विशिष्ट स्तत्र व्यभिचारोऽसिद्धिमध्ये एव ^नि१

(२) टिप्पणी—अथात्र प्रमेयत्व मवृत्ति प्रमेयत्वात् इत्यत्र वृत्तित्व वदवृत्ति प्रमेयत्वरूप व्यभिचारे अव्याप्तिः तादृश व्यभिचार विषयकनिश्चय सामान्या प्रतिबध्यत्वस्य तादृश यत् किंचित् ज्ञाने अभावात्। इति चेन्न। यादृश रूपावच्छिन्न विषयक निश्चयत्वव्यापकयत् किंचित् प्रतिबंधकतानिरूपितप्रतिबध्यत्वाभाववत्वस्यैव तादृशयत् किंचित् ज्ञाने निवेशनीयत्वात् तत्र चव्याप्ति ग्रहनिरूपित व्यभिचारविषयकज्ञानप्रतिबंधकतामादायै व लक्षणसमन्वयात् नच वन्ह्याभाववत्न्हदत्वावच्छिन्न विषयकनिश्चयत्वव्यापकत्ववन्ह्य भाववान् हृदइति ज्ञाननिष्ठप्रतिबंधकतानिरूपित प्रतिबध्यत्वाभावस्य तादृश यत्किंचित् ज्ञाने सत्वात् बाधादावतिव्याप्ति रिति वाच्यम्। तादृश यत् किंचित् प्रतिबंधकतायाः समूहालंबना नुमितित्वव्यापकप्रतिबध्यतानिरूपितत्वस्य निवेशनीयत्वात् एवंचा त्र सामान्य पदानुपादाने वन्हिव्यापकीभूता भावप्रतियोगित्वाभाववज्जलव ह्रदकालीन वन्हिमान जलादि यत्र वन्हिव्यापकीभूताभावप्रतियोगित्वव ज्जलत्वव द्रूपासिद्धा वसाधारण्य

०धूमभाववद्वृत्तित्वाभाववद्वन्हिमत्पर्व्वतोधूमवान्वन्हेः

विषयकतादृशसमूहालंबननिश्चयीया साधारण्य प्रतिबंधकतामादाया ति व्याप्तिः नच तादृश रूपावच्छिन्नविषयक तत्र त्यासाधारण्य विषयकनिश्चयनिष्ठ य त्किंचित् प्रतिबंधकतान्तगतासाधारण्य प्रतिबंधकतानिरूपित प्रतिबध्यत्वाभावस्य तादृश यत् किंचित् ज्ञाने सत्वात् कथ मति व्याप्तिरि ति वाच्यम् असाधारण्या व्याप्ति भयेन तादृश यत् किंचित् प्रतिबंधकतायां हेतुमान् पक्षः साध्यवानि त्याकारक ग्रहन्व व्यापकप्रतिबध्यतानिरूपितत्वा साधारण्य विषयकत्वा नवच्छिन्न त्वोभयाभावस्य निवेशनीयतया तत्रा तिव्याप्ते दुर्वारत्वात् कथंवा धूमाभाववद् वृत्तिवन्हित्ववदवन्हिकालीन धूमवान वन्हे रित्यादौ धूमाभाववद् वृत्ति वन्हित्ववद्रूपासिध्यौ व्यभिचार विषयक तादृशसमूहालंबननिश्चयीय व्यभिचारप्रतिबंधकता मादायातिव्याप्तिरतः सामान्य पदोपादान मावश्यकं नच तथापि स्वानवच्छेदक विषयताशून्य ज्ञानीयत्वमेव यत्कि ंचत् प्रतिबंधकतायां निवेशनीयम् स्वपदं यत्कि चित् प्रतिबंधकतापरम् तादृश समूहालंबनज्ञाने स्वानवच्छेदकीभूता सिद्धिघटकजलत्वत्वावच्छिन्नविषयताशून्यत्व विरहात् सामान्य पदस्य वैयर्थ्यं दुर्वारमे वेति वाच्यम् यतः सत्ववत् हेतुकस्थलीय साध्याभावव दवृत्ति घटादिरूपसव्यभिचारे ऽव्याप्तिः तत्रा वच्छिन्न विषयतानिरूपित साध्या भावव द्वृत्तित्वावच्छिन्नविषयताशालि निश्चयत्वेन व्याप्तिबुद्धिप्रतिबंधकतया स्वानवच्छेदकीभूत शांसर्गिकविषयताशून्यत्वा भाववत् स्वानवच्छेदकविषयताशून्यज्ञानीयत्वस्य तादृश यत्कि चित् प्रतिबंधकतायां निवेशयितु मशक्यत्वात् । परंतु यत्र दोषविषयकनिश्चयो नियमतः स्वानवच्छेदकीभूतविषयितावान् तत्र व्यभिचाररूपं दोषे ऽव्याप्ति रतः तन्नि वेशयितुं नशक्यते इत्याहुः ।

निवेश्यते इति हृदयं पक्षसाध्यसाधनानाम प्रसिद्ध्या समन्वयनिरास इति तेषां ज्ञानस्य यथोक्त ज्ञान प्रति बंधकत्वादिति भावः । असिद्धि संकीर्णो न्हदादौ धूमादि साधने वन्ह्यादि हेतुः तत् संग्रहः । तत्र यथा श्रुत पक्षवृत्तित्वा सत्वेपि यथोक्त ज्ञाना विरोधित्व विशिष्टा नुमिति विरोधि साध्याभाववद्वृत्तित्व मादाय लक्षणसमन्वय संभवादिति भावः ननु विरोधोपि यथोक्त ज्ञाना विरोधी अनुमिति विरोधीचे त्यति प्रसंगः । नच विरुद्धो हेतुः साध्य वद्व्यावृत्ततया असाधारणएवेति न तत्र सव्यभिचार लक्षणाति व्याप्ति प्रसक्ति रिति वाच्यम् यथोक्त ज्ञाना विरोधित्वविशिष्टा नुमिति विरोधित्वस्य विरोध

(४) टिप्पणी—ननु पक्षवृत्तित्वेसतीत्यनेनं पक्षधर्मिकसाध्यवत् विरोधित्वनिवेसेनैव वाधस्वरूपासिद्धिसाध्या सामानाधिकरण्य रूपविरोधानां वारणसंभवे व्यर्थं पृथक् विरोधान्यत्व विशेषणमि ति चेन्न। घटो धूमवान घटनिरूपितत्वाभाववद्वृत्तित्व कालीन वन्हेरि त्यत्र धूमाभाववद्वृत्तित्व। घटनिरूपितत्वाभाववद्-वृत्तित्वकालीन वन्हिरूप व्यभिचारे ऽव्याप्तिः धूमवद् घटवृत्ति घटनिरूपितत्वाभाववद्वृतित्व कालीन वन्हिरि त्याकारकहेतु धर्मिक साध्यत्व पक्षवृत्तित्वग्रहस्या साधारण्ये तस्य सव्यभिचार पदप्रवृत्ति निमित्तत्वा संभवात् तदवच्छिन्नवतः सव्यभिचारपदार्थत्वे तत्पदस्य पारिभाषिकत्वा पत्तेः सव्यभिचारलक्षणा तिव्याप्ते श्चाशक्यपरिहारत्वा दतआह विरोधोपीति फलतः तदभावव्याप्य वत्ताज्ञान विधया अनुमिति प्रतिबंधरूपफलप्रयोजकज्ञानविषयत्वेन प्रतिरोधएवप्रतिरोधतुल्यएव। तथाच पक्षे साध्यं वत्ताज्ञानं प्रतिबंधकत्वा न्नतत्राति प्रसंग इति भावः पक्ष वृत्तित्वे सति साध्यव्यापकीभूता भाव प्रतियोगित्वं विरोधः। तादृशाभाव प्रतियोगित्वं च साध्याभावस्य व्यतिरेकव्याप्ति रिति तज्ज्ञानं तदभावव्याप्यवत्ताज्ञानविधया पक्षे साध्यवत्ताज्ञानं विरुणद्धीति हृदयं साध्यासामानाधिकरण्यस्यैव चिंतामणिकार मते विरोधतया तस्य पक्षे साध्यवत्ताज्ञाना विरोधितया ऽति व्याप्ति दुर्वारैवे त्यत स्तन्मताभिप्रायेण तद्वारणाय प्रकारांतर मनु सरति तदन्यत्वे न वेति विरोधान्यत्वेन वेत्यर्थः (१)विरोधि अनुमिति विरोधि अथै तन्मते किमसाधारण्यं न तावत् (स)पक्षवृत्तित्वेसति साध्यव्यापकीभूताभावप्रतियोगित्वं तज्ज्ञानस्य पक्षे साध्यवत्ताज्ञानंप्रति साध्याभाव व्याप्यवत्ताज्ञान मुद्रया विरोधित्वेन सत्यंतार्थ विरहात्। नापि निश्चित साध्यवद्व्यावृत्तत्वं तज्ज्ञानस्या नुमितौ तत्कारणीभूतज्ञाने वा प्रतिबंधकता विरहेण हेत्वाभाससामान्यलक्षणस्यै तल्लक्षणस्य च तत्साधारण्य विरहात् अनुमिति कारणीभूत हार्य्यत्वात् तदविरोधित्वस्या प्रसिद्धे अनाहार्य्यत्वाभावाच्चे त्यतो हेतु धर्मिक साध्यवत्प क्षवृत्तित्वग्रहा विरोधित्व मपहाय साध्यवान पक्ष इत्याकारक ग्रहाविरोधित्वनिवेश एव युक्तः। तथाच विरोधा न्यत्वविशेषणस्य सहजतएवसार्थक्यमि ति विभावनीयं।

प्रति० रोधः सत्प्रति पक्षः

ह्रदो वह्निमा हृदत्वा दित्यादि स्थले

गादा० २९

०सामान्यवत्तानुद्धौ। विशाषाभाववत्तानुद्धे स्प्रतिबंधकत्वात्

द्वि१

साध्यसामानाधिकरण्य ज्ञानं प्रति साध्यवद्वृत्ति विशेषा वृत्तित्वज्ञानस्या प्रतिबंधकत्वात् कथंचित्प्रतिबंधकत्वे साध्यसामा नाधिकरण्य ग्रहा विरोधित्वरूप विरोधान्यत्वस्य तत्रा सत्वेन प्रकृत लक्षणस्य तत् साधारण्या संभवात्। नापि पक्षवृत्तित्वा विशेषितं साध्यव्यापकीभूता भाव प्रतियोगित्वं तज्ज्ञानस्यापि अनुमितौ तज्जनकज्ञाने वा ऽविरोधित्वात्। यदि धर्मिणि प्रकृत हेतुमत्ता ज्ञानसहकृत प्रकृतहेतौ साध्यव्यापकीभूताभाव प्रतियोगित्वज्ञान मनुमितिं प्रतिबध्नाति स्थाणुत्वा भावव्याप्य करादिमांश्चाय मित्यादिज्ञान दशाया मपि अयं स्थाणु रितिज्ञाना नुदयात् धर्मिविशेष्यक तद्वत्ताज्ञान विशिष्ट तत्धर्मिक ग्राह्याभाव व्याप्यत्व निश्चयत्वे नैव तदभाव व्याप्यवत्ता ज्ञानस्य प्रतिबंधकत्वा दित्युच्यते तदा तादृश धर्मस्य पक्षे साध्यवत्ताज्ञानविरोधित्वात् सत्यंतार्थाविरहादिति केचित् पक्षवृतित्वविशेषितं साध्यव्यापकीभूता भाव-प्रतियोगित्वमेवा साधारण्यं सत्यंतदलेचाविरोधिताघटक प्रतिबंधकतायां तादृशा साधारण्य विषयकत्वानवच्छिन्नत्व विशे-षणं प्रक्षिप्य तत्साधारण्यं प्रकृत लक्षणस्यो पपादनीय मित्याहुः। परेतु हेतुनिष्ठ साध्यव्यापकीभूता भाव प्रतियोगित्व मेवा साधारण्यं तद्विषयकत्वस्य पक्षधर्मिक हेतुमत्ताज्ञानविरहकालीनानुमित्य प्रतिबंधकज्ञान साधारणतया ऽनुमिति प्रतिबंधकता तिरिक्त वृत्तित्वेपि पक्षधर्मिक हेतुमत्तानिश्चय विशिष्ट यादृशविशिष्टविषयक निश्चयत्व मनुमिति प्रतिबंधकता नतिरिक्त वृत्ति तादृशत्वस्य सामान्यलक्षणे ऽत्र च विवक्षणीयतया सामान्यलक्षणस्यप्रकृतलक्षण विशेष्यदलस्य च तत् साधारण्य निर्वाहः। पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदक विशिष्ट साध्यवत्तादि ज्ञाना विरोधित्वस्य च तादृश यत्किंचिज्ज्ञानं० यादृश धर्मावच्छिन्न विषयकनिश्चय सामान्या प्रतिबध्यं तादृश धर्मवत्वस्य ग्रस्ये शरीरे निश्चयांशे पक्षधर्मिकहेतुमत्तानिश्चय वैशिष्ट्या निवेशा तादृश निश्चय विरहकालीन हेतुनिष्ठ्ये+व्यापकीभूता भाव प्रतियोगित्व विषयकनिश्चयस्या पि तद्विषयकनिश्चयसा-

नि७ २९

^४२ +साध्य ^रूप२ ०पृ४पं५।

(१) टिप्पणी—यादृश विशिष्ट विषयक निश्चयत्व मनुमिति प्रतिबंधकता शून्य पक्षधर्मताज्ञान कालीन ज्ञानावृत्ति तादृशत्व मेव विवक्षणीयं स्वव्यापक तत्कत्वरूपा नतिरिक्तवृत्तित्व निवेशो विफल इति विभावनीयं।

मान्यां तर्गतत्वेन पक्षेसाध्यवत्ता ज्ञानस्य च तद प्रतिबध्यतया तद्दलस्या प्येतत् साधारण्यो पपत्ति रित्याहुः वस्तुतो (१)यादृश विशिष्टविषयकनिश्चयत्वं अनुमिति प्रति बंधकता शून्य पक्षधर्मता ज्ञाना वृत्ति तादृशत्वं बोध्यं। अथ वा स्वव्यापकतत्कत्व रूपा नतिरिक्त वृत्ति त्व निवेशे यादृश विशिष्टविषयकनिश्चयत्व व्यापकः पक्षधर्मताज्ञानकालीनत्वानुमित्य प्रतिबंधकत्वो भयाभावः तादृशत्वं विवक्षणीयं। अन्यथा स्वरूपासिद्धि वारकस्य हेतुमत्ता ग्रहाविरोधित्व दलस्यै व वैयर्थ्या पत्तेः पक्षधर्मिक हेतुमत्तानिश्चयकालीनो तद्विषयकनिश्चयस्या प्रसिद्ध्या यादृश विशिष्टविषयकपदेन तस्योपादाना संभवात् एवं सामान्य लक्षणस्यापि अव्याप्तिः (२) यथा विवक्षितेतु तद्विषयकनिश्चयत्वस्या नुमिति प्रतिबंधकता शून्यपक्षधर्मिकहेतुमत्तानिश्चय कालीन ज्ञाना वृत्ति-

(२) टिप्पणी—नच ह्रदधर्मिकधूमवत्ताज्ञानोत्तरं लौकिक संनिकर्षजन्यधूमाभाव वद्ध्रद विषयकज्ञानस्य धूमाभाव व्याप्यवद्ध्रद विषयकज्ञानस्य चानाहार्य्यस्य प्रसिद्ध्यापक्षधर्मिकहेतु मत्तानिश्चय विशिष्ट धूमाभाववद्ध्रद विषयकत्वस्य धूमाभावव्याप्यवद्ध्रद विषयकत्वस्य वा यादृश विशिष्ट विषयकत्वपदे नोपादानसंभवात् धूमाभाववद्ध्रदे धूमाभावव्याप्यवद्ध्रदेवातिव्याप्ति वारकतया तद्दलसार्थक्यात् सामान्यलक्षणेच लौकिकसंनिकर्ष जन्य ज्ञानमादाय लक्षणसमन्वयसंभवात् कथंमुक्तं तद्दलस्य वैयर्थ्यापत्तेः कथंवा सामान्यलक्षणे ऽव्याप्तिः चेतिवाच्यम् प्रकारता विशिष्टान्यत्व मेवानाहार्यत्वं वशिष्ट्यं च स्वनिरूपक ज्ञान कालीनत्व स्वावच्छेदक धर्मावच्छिन्न प्रतिबध्यतानिरूपित प्रतिबंधकतावच्छेदक विषयतावच्छेदक धर्मावच्छिन्न विषयता वत्वोभयसंबंधेन एतादृशंचा नाहार्यत्वं धूमवान ह्रदोधूमाभाववान इति ज्ञाने धूमवान् ह्रद इति ज्ञानोत्तर. लौकिक संनिकर्षजन्यधूमाभाववान ह्रद इति ज्ञाने धूमवान्ह्रदो धूमाभावव्याप्यवान ह्न्द इति ज्ञाने चासत्वात् तथाचात्र लक्षणे ऽति व्याप्तिः सुघटै वेति ध्येयं। अन्यथानाभइदं कल्पद्वयमनंगीकृत्य परे त्वित्यादि पूर्वोक्तार्थे २

नाहार्य्य२ ज्ञनाहार्य्य१

ज्ञान २ कालीनानाहार्य्य ज्ञना १ हार्य्य

गादा० ३० त्वेन तत्रा ति व्याप्ति वारकतया तत्सार्थक्यात् सामान्यलक्षणस्या पि संगमाच्च अत्र वदंती त्यादि निष्कृष्टकल्पेच पक्षवृति-
त्वासहितोक्तरूपस्य स्वविषयकनिश्चया व्यवहितोत्तरा नुमिति सामान्ये उभयाभावसत्वात् सामान्य लक्षणाक्रांत त्वं विशेष-
लक्षणाक्रांतत्वंच निर्वहति हेतौ साध्यव्यापकीभूता भाव प्रतियोगित्व ज्ञानानंतरं हेतुमान् साध्यवानि त्यनाहार्यज्ञानस्य कदाप्य
नुदयात् एतादृश विशेषणप्रक्षेपे मूलकृतः संमति माह वक्ष्यतीति ननु हेतुनिष्ठसामानाधिकरण्या त्यंता भाव तद्भेद साध्य-
निष्ठहेतुसामानाधिकरण्या भावादि साध्यासामानाधिकरण्य विशिष्ट साधनादि रूपविविधविरोधाना मेकस्य भेदनिवेशे ऽन्यत्रा
तिव्याप्ति दुर्वारैव एवं साध्या सामानाधिकरण्य विशिष्ट साधनादिरूप विरोध भेदनिवेशे साध्याभाव वद्वृत्तित्व विशिष्ट
साधनादिरूप विरुद्धस्थलीय व्यभिचारस्या संग्रहः गोत्ववद् वृत्तित्व विशिष्टा श्वत्वादितो गोत्वाभाव वद्वृत्तित्वादि विशिष्टा
श्वत्वादे रनतिरिक्तत्वादि त्यत आह हेत्विति हेतुतावच्छेदका वच्छिन्न धर्मिक साध्यता वच्छेदकावच्छिन्न सामानाधिकरण्य
प्रकारकज्ञाना विरोध्यर्थक मित्यर्थः तेन विरोधग्रहदशाया मपि रूपांतरेण साध्य हेतुविषयसामानाधिकरण्य ग्रहो त्पत्ता वपि
नक्षतिः। नचा ऽवृत्ति हेतुकस्थले तदुभय सामानाधिकरण्या प्रसिद्ध्या तत्स्थलीया साधारण्या संग्रहः। सामानाधिकरण्येपि
साध्यतावच्छेदकावच्छिन्नीयत्वं वैज्ञानिकं नतु वास्तवं तेन नावृत्ति साध्यकसाधारण्या संग्रहः अविरुद्ध हेतुकस्थलीय व्यभि-
चारलक्षणे च तद्विशेषण मनुपादेय मेव तेन तत्र हेतुसाध्यसामानाधिकरण्य ग्रहविरोध्यप्रसिद्धा वपि नक्षतिः वस्तु तस्तु
तादृश सामानाधिकरण्यग्रहत्व न्यून वृत्तित्वस्यै वा नुमिति विरोधित्वघटका नुमिति निष्ठ प्रतिबद्ध्यतायां निवेशनीयतया
धूमवान्वन्हेरित्यादौ सामानाधिकरण्य ग्रहविरोधिनो ऽप्रसिद्धा वपि नक्षतिः। केचित्तु सत्यंतस्य विशिष्ट हेतौ विशिष्टपक्ष
वृत्तित्वग्रहा विरोधित्व मेवार्थ वर्णयंतोबाधादिवारणाय पंथानमन्यमेवाश्रयंते तन्मत माक्षिपति। संबंध पदेति। प्रकृत हेतु ३०

* वह्निमान् गगनात्

संबंधितया विरोधित्वं प्रकृत हेतुतावच्छेदकावच्छिन्न विशेष्यता निरूपितयद्रूपावच्छिन्न प्रकारताशालि निश्चयत्वं अनुमिति प्रतिबंधकतावच्छेदकं तद्रूपावच्छिन्नत्वं यत्किंचि द्रूपावाच्छिन्न हेतुविशेष्यतानिवेशे द्रव्यं वन्हिमत् धूमादित्यादौ पक्षतावच्छेदकावच्छेदेन साध्यसिद्धे रूद्देश्यतायां द्रव्यत्वाद्य वच्छिन्न धूमादि विशेष्यतानिरूपितसाध्याभावादि प्रकारताशालि निश्चयत्व स्यानुमिति प्रतिबंधकता वच्छेदकत्वात् । साध्याभावादि वारणा संभव इत्यतो हेतुतावच्छेदकावच्छिन्नेति अथैवं हेत्व घटित साध्याभाव वद्वृत्तित्वादिकमेव व्यभिचारः स्यात् । नचेष्टापत्तिः तस्य सामान्य लक्षणा नाक्रांतत्वात् । हेतुतावच्छेदकावच्छिन्न हेतुनिष्टत्वस्य विरोधिविशेषणत्वोपगमे तादृशाति प्रसंगवारणे पि साध्याभावबद्वृत्तित्वादिविशिष्टसाधनादेः साध्याभावनिष्ठसाधन सामानाधिकरण्यादे श्चा संग्रहः । नच हेतुतावच्छेदकावच्छिन्न घटितत्वे सति विरोधित्वमेव प्रकृते हेतुसंबंधितया विरोधित्वं तच्च विशेषण विशेष्य भाव भेद भिन्नसकल व्यभिचारसाधारण मेवेति वाच्यम् । तथा सति न्हदो वन्हिमान भावादि त्यादौ वन्ह्यभाववत् न्हदादि रूप वाधादौ गगनवान भावादि त्यादा ववृत्तित्व वत् गगनादि रूपव्याप्यत्वासिद्धौ चातिव्याप्त्यापत्तेः । मैवं व्यभिचारलक्षणस्य न तादृशरीत्या परिष्कारः । अपितु सव्यभिचारलक्षणस्यैवेति न साध्याभाव निष्ठ साधनसामानाधिकरण्याद्यसंग्रहे हेत्वघटित साध्याभावबद्वृत्तित्वादेः संग्रहे वाक्षतिः अथवा हेतुनिष्टत्व विशेषित तादृशविरोध्येव वा व्यभिचारपदार्थः । अन्यविधोपदर्शित व्यभिचारस्तु तन्मते व्याप्यत्वा सिद्धावेवांतर्भवतु तावता क्षतिविरहात् । प्रायश इत्यस्य प्रयोजनं स्वयमेव प्रकाशयिष्यते । वाधादीत्यादिना सत्प्रतिपक्षादि परिग्रहः तत् साध्यक तद्धेतुकानुमिति सामान्यं प्रति हेतु संबंधितया विरोधित्व विवक्षणे तादृशवाधादि वारणसंभवा दसाध्यत्व मुपेक्ष्य प्रयत्नसाध्यत्व कथनं नचैवं हेतुसंबंधितये त्यस्य वैय्यर्थ्य मिति वाच्यम् । तदनुपादाने॰ साध्यनिष्ठावृत्तित्व रूप व्याप्यत्वा सिद्धावतिप्रसंगापातात्

॰गगनवानभावादित्यादै।

गादा० ३१

तस्य तत्साध्यकानुमितिमात्र एव विरोधित्वात् । नच तदुपादानेपि हेतुनिष्ठावृत्तित्वेतिप्रसंगो दुर्वार इति वाच्यं । सत्यंतदलेनैव तद्वारणा दतएव हेतुनिष्ठ पक्षावृत्तित्वादे स्तादृशानुमिति सामान्याविरोधित्वादेव वारणे सत्यंत वैय्यर्थ्य मित्यपि परास्तं कांचनमय वन्हिमान् वन्हे रित्यादौ साध्याप्रसिद्धि वारणंतु विशिष्ट साध्यग्रहाविरोधित्व विशेषण प्रक्षेपेणैव संभवतीति हृदयं तत् बाधादिवारणं । अत्रच व्यभिचारज्ञानस्य प्रकृतपक्षे प्रकृतसाध्यानुमित्य विरोधितया प्रकृतपक्षे प्रकृतसाध्य तद्व्याप्य प्रकृतहेतु वैशिष्ट्यावगाह्य नुमितिपरत्व मावश्यकं तत्र निष्प्रयोजनकं साध्यवैशिष्ट्या वगाहित्वं निवेश्य तन्निबंधन बाधाद्यति व्याप्तिवारक विशेषणान्तर प्रक्षेपः प्रक्षालनाद्धीत्यादि न्यायेना युक्त इत्यतो ज्ञाने साध्यवैशिष्ट्यावगाहित्वं विरोधिनि बाधादि वारक विशेषणं च परित्यजति वस्तुतस्त्विति आश्रयासिद्ध्यादीत्यादिना स्वरूपासिद्धि साधनाप्रसिद्धि परिग्रहः । यथाश्रुते आश्रयासिद्ध्यादि वारणा संभवाद सिद्धि संकीर्ण व्यभिचारासंग्रहाच्च (१) सत्यंतार्थं व्याचष्टे ] प्रथमं तादृशेति पक्षतावच्छेदकविशिष्टेत्यर्थकं । उदीच्यं तद्धेतुतावच्छेदकविशिष्टार्थकं । ननु वन्हिमान् वन्हिमान् न्हदत्वादित्यादौ हेतुनिष्ठ साध्या सामानाधिकरण्यादि रूपा साधारण्या संग्रहः । तत् ज्ञानस्य साध्यात्मकपक्षतावच्छेदकविशिष्टे हेतुमत्ता ग्रह विरोधित्वा दतआह्यानयेति (२) अनुमिति कारणीभूतं व्याप्तेः पक्षधर्मतायाश्च ज्ञानं तथाच पक्षधर्मताज्ञानाविरोधित्व कथनेन परिशेषाद्व्याप्तिग्रहविरोधित्व मेव लभ्यत इतिभावः । ननु एतत् साध्यसाधनयोरप्रसिद्ध्याद्यतिव्यापकं अन्योन्यात्यंताभावगर्भव्याप्त्यो

(१) टिप्पणी—असिद्धि संकीर्णे न्हदो धूमवान वन्हे रित्यादौ व्यभिचारस्य धूमाभाव वद्वृत्तित्व विशिष्टस्य वन्हेः पक्षी भूत न्हदवृत्तित्वा दसंग्रह इत्यर्थः ।

(२) टिप्पणी—यदधिकरण वृत्तित्वाभावो यत्र गृह्यते तद्धर्मितावच्छेदकक तत् प्रकारक ज्ञानानुदयात् घटो भूतला वृत्ति रिति ज्ञान सत्वे भूतलं घटव दित्यनुभवात् । प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरं॥ द्वा१
इति न्यायेन

०धूमवान् वन्हेः

इदं द्रव्यं द्रव्यत्वात्याभिचारि सत्वात्

रेकतरोपादाने ऽन्यतरासंग्राहकं साध्याव्यभिचरितत्व विशिष्ट साध्यसामानाधिकरण्याभावरूपव्याप्यत्वासिद्धावतिव्यापकं चेत्यत आह । विवेचयिष्यत इति विशिष्टसाध्यसाधनग्रहाविरोधित्वं निवेश्य साध्याप्रसिद्ध्यादिकं वारयिष्यते विशिष्ट साधनग्रहाविरोधी व्यभिचारो१ ऽसिद्धावेवान्तर्भावनीयः समूहालंबनात्मकनानाविधव्याप्तिज्ञानमादायात्यंतान्योन्याभाव गर्भ-विविधव्यभिचाराः संगृहीष्यंते व्याप्त्यभावोव्यभिचारएवांतर्भावयिष्यते तस्य वहिर्भावनीयत्वे० विशकलितयोरेवा व्य-भिचार सामानाधिकरण्ययो र्ज्ञान मुपादेयमिति न कस्याचिदपि दोषस्या वकाश इतिभावः ननु सपक्षवृत्तित्वज्ञानस्या नुमित्याद्यविरोधितया सपक्षविपक्षवृत्तित्वस्यानुमितिविरोधित्वोक्ति र्न संगच्छते । नच विपक्षवृत्तित्व ज्ञानस्या नुमिति प्रतिबंधकतया तद्घटित विशिष्टस्यानुमितिविरोधित्व मक्षतमेवेति वाच्यं । तथासत्यपिविपक्षवृत्तित्वमात्रस्यापि तथात्वा त्तदादायैव लक्षणगमनसंभवे विशिष्टमादाय लक्षणसंगमनस्य संदर्भविरुद्धत्वात् । विपक्षवृत्तित्वमात्रस्यातथात्वे० तदादाय विरूद्धे ऽतिव्याप्तेरप्रसक्तेः१विरुद्धोपीत्यग्रिमग्रंथासंगति श्चेत्यत आह । सपक्षेतीति । तथाच विपक्षवृत्तित्वमात्रं विवक्षित मितिभावः अतएव । सपक्षवृत्तित्वस्या विवक्षितत्वादेव । मूले एतदज्ञानमिति दृष्टांतविधयोक्तं तथाच एतादृशानुगत धर्माज्ञान-दशाया मिव तत् ज्ञानदशायामपि अवश्यकल्प्यप्रतिबंधकताक ज्ञानस्यैव दोषत्वात् । अनुमित्यनुत्पादप्रयोजकत्वादित्यर्थः । तथाचा नुगत धर्मज्ञानदशायां प्रत्येकज्ञानस्या सत्वे ऽनुमिति रिष्टैव तत्सत्वे ततएवानुमित्यनुत्पाद इति तज्ज्ञानस्य प्रति-बंधकताया अप्रामाणिकत्वा न्न तस्य विभाजकत्व मिति भावः । व्यर्थविशेषणत्वा दिति मूले विशेषणपदस्या नुमिति विरो-धित्वरूप विशेषणपरत्वं न संभवति तदनुपादाने० सद्धेतौ व्यभिचारादतोव्याचष्टे विशेषण मिति । स्वरूपासिद्ध्यादि हेतो रप्यसाधकतया तत्र व्यभिचाराप्रसक्ते स्तद्वारकं विशेषणं व्यर्थमिति भावः । सद्धेतोः साध्यव्याप्यतया तत्रा तिव्याप्त्य-

०असाधकत्वाभाववति । एतादृशलक्षणरूपहेतुसत्वात्)

१ धूमवान् धूमाभाववद्वृत्तित्वन्हेः ॥

०पृ१ पं१

०अन वस्था भिया बहिर्भा वनीयत्वे १सा धारण्य त्वानंगी कारे

१ शब्दोऽनित्यः शब्दत्वात् शब्दोऽनित्यः शब्दत्वात्)

गादा० ३२ प्रसक्ते हेत्वाभासपदंव्यर्थ मित्याशंकां निराचिकीर्षु दोषलक्षणे ऽसिद्धि विशेषात्मकावृत्तित्वाति व्याप्ति वारकतया तत्सार्थकीकर्तुं तदर्थ माह । हेतुवदिति । दशाविशेषे व्याप्यविरुद्धयो१रप्यसाधरणत्वात् तयोः प्रत्येकं यथाश्रुतलक्षणघटकदलद्वय विरहाद व्याप्तिः एवं हेत्वाभासपदस्य वृत्तिमदर्थकत्वे ऽवृत्तेरपि साध्य तदभाववद्व्यावृत्तत्वेना साधारणतया तत्रा व्याप्तिरतः पर्य्यवसितार्थ माह । एवंचेति ननु साध्याभाववद्वृत्तित्वं साधारण्यं साध्यवदवृत्तित्वं चासाधारण्यं तच्च साध्य सामानाधिकरण्य ग्रहएव विरोधि नतु साध्याभाव व्याप्ति ग्रहेपीति कथं तत्संग्रह इत्यत आह । साध्येति । साध्यतदभाववद्व्यावृत्तत्वस्य वृत्तिमत्व विरुद्धतया तत्ज्ञानं वृत्तिमत्व ग्रहप्रतिबंधक मित्यभिप्रेत्याह निश्चितेति । तच्च । तादृश साधारण्यमसाधारण्यं च व्याप्ति द्वयेति । साध्यव्याप्ति साध्याभावव्याप्तीत्यर्थः । साध्यस्य साध्याभावाभावतया साध्याभावनिरूपित व्याप्तिग्रहे साध्यवद्वृत्तित्वस्य ज्ञानप्रतिबंधकमिति तत्घटितस्य साधारण्यस्य साध्याभावव्याप्ति ग्रहविरोधित्वमेव साध्याभाववद्व्यावृत्तत्वस्य ज्ञानमपिसाध्याभावसामानाधिकरण्यघटित साध्याभावव्याप्तिग्रहे प्रतिबंधकमिति तद्घटितस्या साधारण्यस्यापि तथात्वमिति भावः । हृदयमित्यस्वरससुचनाय । एवं साध्याभावाभावत्वेन साध्यविषयक तद्वद्वृत्तित्वज्ञानस्यैव साध्याभावाभाववद्वृत्तित्वघटितस्य साध्याभावे हेतुसमानाधिकरणाभावाप्रतियोगित्वघटितस्य वा साध्याभावव्याप्यत्वस्य ग्रहे प्रतिबंधकतया साध्यतावच्छेदक रूपेण साध्यविषयक तद्वृत्तित्वज्ञानस्य न प्रतिबंधकत्वं निश्चितसाध्यादि मद्व्यावृत्तत्वज्ञानस्य साध्यादि सामानाधिकरण्य सामान्याभावा विषयकतया साध्यादि व्याप्तिग्रहाप्रतिबंधकत्वंच । विशेष्य दलप्रयोजनं स्फुटयति । असिद्धि विशेष इति । स्वरूपा सिद्धि र्व्याप्यत्वा सिद्धिर्वेत्यर्थः एतच्चालक्ष्यता लाभाय । ननु निश्चया घटितस्य साध्यतदभाववद्व्यावृत्तत्वस्य वृत्तिमत्व ग्रहे विरोधितया एतदनंतर्भावे तस्या धिकहेत्वा भासतापत्तिरित्यत आह । साध्येति । ३२

द्वू ४१

यदीदृशं यदिवृत्तिमत्व ग्रहविरोधि वृत्तिमत्वग्रहे ग्राह्याभावावगाहितया स्तत्सामान्याभावावगाहि ज्ञानमेव विरोधि नत्वेकविशेषाभावविशिष्टापरविशेषाभाव रूपसाध्यतदभाववत्व्यावृत्तत्व ज्ञानमित्यस्वरसात् यदीति । निष्कृष्टमता भिप्रायेणाह । नोचेदिति । इदमेवनिश्चया घटितं साध्यतदभाववद्व्यावृत्तत्वमेव । एवकारेण निश्चय घटितस्य व्यवच्छेदः (१) । नन्वत्र साध्यादि व्याप्यत्वंयदिसाध्यादिमदन्या वृत्तित्वेसति साध्यादि मद्वृत्तित्वं तदा द्वितीयलक्षणाभेदः साध्यव न्मात्र वृत्यादि पदस्यापि तादृश व्याप्तिमदर्थकत्वादि त्यत आह । व्यापकेति । द्वितीय लक्षणस्या पि यथाश्रुतार्थपरत्वे पूर्ववद्व्याप्य विरूद्धयोर्दशाविशेषेऽसाधारणयो रसंग्रह इत्यत आह । रीतिरिति । तत्रापि साध्य तदभाव वन्मात्रवृत्तिग्रहविरोधि वृत्तिमत्वग्रहा विरोधिधर्मवत्व मेव विवक्षणीय मित्यर्थः । उपाध्याय मत माह । केचित्त्विति असाधारण्या भावकालः प्रकृतहेतुनिष्ठा साधारण्याभावस्या वच्छेदक क्षणः । तेन यदा शब्दत्वादे रसाधारण्यं तादृशक्षणस्य घटत्वादि निष्ठा साधारण्याभावावच्छेदक त्वेपि न क्षतिः । अथ शब्दादौ साध्यसंदेह दशायां शब्दत्वादौ असाधारण्यव्यवहारप्रयोजकस्य तत्कालीनसाध्यादिनिश्चयविषयीभूत घटादिवृत्तित्वविरहस्य शब्दादौ साध्यनिश्चय दशाया मपि तत्र सत्वात् । प्रकृत हेतुनिष्ठासाधारण्याभावस्या प्रसिद्ध्या ऽव्याप्तिः । नच तत्कालीन साध्यादि निश्चय विषयीभूत धर्मिव्यावृत्तत्वरूपा साधारण्य घटक तत्कालादि विरहात् तदानीं तद्घटिता साधारण्य विरहो ऽक्षत एवेति वाच्यं । प्रतियोगि कोटि प्रविष्ट विशेषणा सत्वस्याभावीय विशिष्टाभावाप्रयोजकत्वात् अन्यथा दंडाद्यसत्वे दंडविशिष्टपुरुषाभावादेरिव दंडविशिष्टपुरुषाभावाद्यभावस्या पि सत्वप्रसंगात् यदिच प्रकृतहेतुमद्विशेष्यकसाध्य तदभावान्यतरनिश्चयक्षण एवासाधारण्याभावकालेत्यनेन विवक्षित इत्युच्यते तदाशब्दोनित्यः शब्द-

(१) टिप्पणी—निश्चय घटितस्य तस्य साध्यादि सामानाधिकरण्य सामान्या भावा विषयकत्वेन तादृश व्याप्ति ग्रहा विरोधित्वा दितिभावः

(साध्याव्याप्यत्वेसतीतिमूलस्य यथाश्रुतार्थमेववर्णयन् उपाध्यायमतमाह) शब्दोऽनित्यः शब्दत्वात् शब्दो नित्यः शब्दत्वात्

तयोरतिरिक्तत्वेत्याह

घटग गतव्यावृत्तत्वस्य

धर्मितो दधर्म त्यन्ताभाव

साध्यत्वम भिप्रेत्य

गादा० ३३ त्वादित्यादौ कदाचि दपिसाध्यस्य साध्याभावस्य वा निश्चयो नास्ति तदा सव्यभिचारत्वप्रसंगः। तादृशस्य क्षणस्य प्रकृ
तहेतु मद्वि शेष्यक साध्यादि निश्चयस्याप्यनधिकरणत्वेन तदा तादृश निश्चयक्षणावच्छिन्न साध्यादि व्याप्त्यभावस्य हेतौ
सत्वात् तदा साधारण्यघटकसाध्यादि निश्चयासत्वेना साधारण्यस्य च विरहेणेष्टापत्ते रयोगात्। प्रकृतहेतु निष्ठासाधारण्य
घटको योयक्षतदन्य क्षणस्य विवक्षणे तुयादृशसाध्यकस्थले यादृश साधारणस्य हेतोः कदापि ना साधारण्यं तत्रा व्याप्तिः।
प्रकृतहेतुनिष्ठा साधारण्यस्या प्रसिद्धेः। मैवं। तत्तत् कालावच्छिन्नत्व विशिष्टस्य तत्कालीन साध्यादि निश्चय विषय व्यावृ-
त्तस्वरूपा साधारण्यस्य प्रकृतहेतुनिष्ठाभावा वच्छेदक कालएवा साधारण्याभावकालो हेतुमति साध्यादिनिश्चयदशायां काला-
न्तरावच्छिन्नस्य कालान्तरघटितासाधारण्यस्याभावकूटो हेतौ सुलभ एव। यादृशसाधारणहेतोः कदापि ना साधारण्यं
तत्राप्यंततो गगनादिनिष्ठ प्रकृतसाध्यका साधारण्यस्याभावः प्रसिद्धएवेति न दोषः अथवा प्रकृतहेतुमद्विशेष्यक साध्यतद-
भावान्यतरनिश्चयानधिकरणत्व किंचिद्विशेष्यक साध्यतदभावनिश्चयवत्वो भयाभाववान् क्षणएवा साधारण्याभावकाले त्यनेन
विवक्षितः। शब्दो ऽनित्यः शब्दत्वादित्यादौ कदाचिदपि न साध्यस्य तदभावस्य वा निश्चय स्तत्रक्षणे प्रकृतहेतुमद्विशेष्यक
साध्यतदभावान्यतरनिश्चया नधिकरणत्वसत्वेपि साध्यतदभावनिश्चयवत्वाभावेनो भयाभावो क्षत एवेति तदा न सव्यभिचा-
रता प्रसंगः। प्रकृतहेतुनिष्ठा साधारण्यघटको योयः क्षणः तदन्य क्षण एव विवक्षणीयः। यत्साध्यकस्थले यस्य साधारणस्य
हेतोः कदापि ना साधारण्यं तत्साध्यकस्थलीयलक्षणे ऽसाधारण्याभावकालावच्छिन्नत्वं नोपादेय मेव साध्यसाधनभेदेन
लक्षण भेदादित्यपि केचित्। विशेषणाभावात्। असाधारण्याभावकालावच्छिन्नत्व रूपं यद्व्याप्तिद्वयस्य विशेषणंतदभा-
वात् संग्रहः तादृशविशेषणविशिष्ट व्याप्तिद्वयाभाववत्वं एतन्मतेच पूर्वलक्षणे साध्याभाववद्वृत्तित्वघटिताया उतरत्रच तद- ३३

दन्यावृत्तित्व घटिताया व्याप्ते रनुप्रवेशा ल्लक्षणयोर्भेदः स्वव्यापकसामानाधिकरण्यरूप व्याप्तेरभावो निवेशयितु मशक्यः। स्वत्व घटित तया हेतुभेदेन भेदात्। साधारणहेतुकस्थले तदप्रसिद्ध्याअभावग्रहासंभवात्(१) शिरोमणिव्याख्यायां च तादृशव्याप्ते रप्रसिद्धावपि तद्घटकपदार्थानां परस्परोपश्लेषावगाहिज्ञान (२) विरोधिताया एव निवेशनेनानुपपत्त्यभावा द्व्यापकसामानाधिकरण्य मिह व्याप्यत्व मित्युक्तत्वात्। एवमेतन्मते दुष्टलक्षणपर एवायंग्रंथः नतु दोषलक्षणपरोपि तादृश व्याप्ति द्वयशून्यत्वस्य व्यभिचार पदार्थत्वाभावा दित्यवधेयं। तच्चिंत्यमिति। चिंताबीजं वा साधारण्यशरीरे तत्तत्पुरुषीय निश्चय निवेशस्यावश्यकतया सामान्यलक्षणे पुरुषविशेष नियंत्रितत्वं नचेष्टापतिः। तथासति साधारणहेतावप्य साधारणहेतुवदमुकं प्रत्ययं व्यभिचारीतिव्यवहारप्रसंगात्। एवं सव्यभिचारपदस्य पारिभाषिकत्व मपि तथेति। इतरभेदानुमाने वैय्यर्थ्य संभवे असाधकत्वानुमाने वैय्यर्थ्य परतया व्यर्थ विशेषणत्वा दिति मूलव्याख्यान मनुचित मित्याशयेन इतरभेदानुमाने वैय्यर्थ्यपरतयैव मूलं व्याचष्टे। व्यर्थेती ति। विरोधादे रित्यादिना अवृत्तित्वपरिग्रहः। साध्याभावेत्यादीति। साध्याभावव्याप्तिग्रहाविरोधित्वं वृत्तिमत्वग्रहाविरोधित्वं चेत्यर्थः। तस्य। विरोधादेः पार्थकत्वं व्यभिचारपदार्थबहिर्भूत त्वं। मानाभावादिति। तथाच विरोधादेरपि व्यभिचारपदार्थरूप पक्षेतरभेदसत्वेन तद्व्यावर्तकविशेषणानवच्छिन्नस्यैव इतरभेदानुमापकत्व संभवादितिभावः। हेत्वाभासपदस्यान्यथाव्याख्यानात्दुष्टहेतुत्वरूप हेत्वाभासत्वस्य लक्षणाघटकत्वात् प्रथममित्यादि दूषणस्यासंगतिः एवं गगन मनित्यं शब्दाश्रयत्वादित्यादौ हेतोः साध्याभावव्याप्यत्वेपि साध्याभावव्याप्तिग्रहविरोधि दर्शितधर्मवत्वं तत्राक्षत मेवेति तत्राव्याप्तिदान घि ५

(१) टिप्पणी—व्याप्त्यभाव ग्रहा संभवात्।

(२) टिप्पणी—निरूप्य निरूपक भाव पन्न विषयता शालि ज्ञानं।

मप्यसंगत मतो यथाश्रुतार्थे तादृशदोषद्वयं संगमयति । प्रथममिति । एकमात्रसंपक्ष विपक्षस्थले सर्व सपक्षाद्यप्रसिद्धिरित्याशंक्य व्याचष्टे । सपक्षेति । सपक्षवृत्तित्वत्वावच्छिन्नाभावो विपक्षवृत्तित्वत्वावच्छिन्नाभावश्चेत्यर्थः । सर्वतद्व्यावृत्तत्वं । सर्वसपक्षविपक्षव्यावृत्तत्वपदार्थः । तावतैव यत्किंचित् सपक्षविपक्षव्यावृत्तयो (१) र्व्याप्यविरुद्धयो र्ना तिव्याप्त्यवकाश इतिभावः । सपक्षसत्व विपक्षव्यावृत्तयो विरूद्धस्या तिव्याप्तिवारकतया सार्थक्यं संभवत्येवे त्याशंक्य दूषकतानुपयोगित्वरूप वैयर्थ्यपरतां व्यर्थविशेषणत्वादितिमूलस्याह । सपक्षेति । व्याप्यविरूद्धयोरिति । शद्बोऽनित्यः शद्बत्वादित्यादौ व्याप्यस्य हेतोः साध्यवन्मात्र वृत्तित्वेपि पक्षेपिवृत्तेः पक्षातिरिक्त साध्यवन्मात्रवृत्यन्यत्व मक्षतमेव एवं शद्बो नित्यः शद्बत्वादित्यत्र विरूद्धस्य हेतोः साध्याभाववन्मात्रवृत्तित्वेपि पक्षेपि वृत्तेः पक्षातिरिक्त साध्याभाववन्मात्रवृत्यन्यत्व मक्षतमेवेति द्वयोः संग्रह इतिभावः पक्षातिरिक्तेत्यत्र पक्षपदस्य तत्तद्धर्मिमात्रपरत्वे पक्षे साध्य साध्याभावान्यतरनिश्चयदशायां शद्बोनित्यः शद्बत्वादित्यादावतिव्याप्तिः । सिद्ध्यभावरूप पक्षताविशिष्टपरत्वे पक्षे सिद्धिदशायां तत्र विशिष्टा तिरिक्तत्व सत्वोपगमात् अतिरिक्तांतस्य पक्षताशून्यपरत्वोपगमा द्वा अतिप्रसंग वारण संभवेपि शद्बोऽनित्यशद्बत्वादित्यादौवाधानिश्चयदशायामतिप्रसंगोदुर्वारः । एवं सिद्धिवाधान्यतराभावरूप पक्षताविवक्षणे च गौरवमतः संशयरूप पक्षतापरतया व्याचष्टे । पक्षत्वमिति । संदिग्धसाध्यकत्वं विषयतासंवंधेन साध्यसंदेहविशिष्टत्वं कालांतरीण संशयविषयेष्वपि संशयरूपविशेषणासत्वदशायांतद्विशिष्टभेदउपगम्यते अतिरिक्तांतंवा पक्षताशून्यपर मतः साध्यादिनिश्चयदशायां नातिप्रसंगः । यदापक्षेसाध्यतदभावयो र्न निश्चयो नापिसंशय स्तदा शद्बोऽनित्यःशद्बत्वादित्यादे र्नासाधारण्यं किंतु यथायथं सद्धेतुत्वंविरुद्धत्वंवेति नाव्याप्तिप्रसंगइतिभावः । पक्षातिरिक्तवृत्तिर्यत्साध्यतदभावव- 

(१) टिप्पणी—सपक्ष विपक्ष वृत्तिता प्रतियोगिका भाव वतो रित्यर्थः ।

न्मात्रवृत्तितदन्यत्वार्थकत्वे वन्हिमाधूमादित्यादौ नातिव्याप्तिसंभवः भेदप्रतियोगितावच्छेदकघटकदलद्वयस्यैव तत्रसत्वेन विशिष्टभेदासत्वादतः पक्षातिरिक्तत्वस्य साध्यादिमद्विशेषणत्वाभिप्रायकतया मूलंसंगमयति। धूमेत्यादीति। यथाश्रुते पक्षातिरिक्तो यः साध्यादिमां स्तन्मात्रवृत्तिभिन्नत्व मित्यर्थे सप्तमीसमासादित्यर्थेनतुदूषणमितियोजना सप्तमीसमासलभ्येएतादृशार्थेन दूषण मित्यर्थः। ह्रदोधूमवान्वन्हेरित्यादिसाधारणे शद्बोनित्यः शद्बत्वादित्यादा वसाधारणेच यथाश्रुतलक्षणस्या व्याप्तिंव्याचष्टे। पक्षवृत्तीत्यादिनापक्षवृत्तित्वस्य साध्यसमानाधिकरण्यस्यच योग्रहस्तदविरोधीत्यर्थः। अनुमितेरौपायिकस्येति समासेनलिखनजनकज्ञान विषयेत्यस्य समुदायव्याख्यानतायामेव संभवतीत्यतो व्यासेनलिखनं। सपक्षसत्वादेर्नानुमितिजनकत्वं अपितु तज्ज्ञानस्यैवेत्यौपायिकपदस्य जनकार्थत्वं नसंभवतीत्यतोव्याचष्टे जनकज्ञानविषयस्येति। सपक्षसत्वादेरित्यादिना विपक्षासत्वपरिग्रहः तेनद्रव्यंसत्वादित्यादौ सपक्षसत्वाभावासत्वेपि विपक्षसत्वादेव लक्षण समन्वयः नन्वत्रासाधारण्ये ऽव्याप्ति स्तस्यसपक्षव्यावृत्तत्वघटिततया साध्यवद्वृत्तित्वान्यविरोधित्वादित्यतआह। सपक्षविपक्षव्यावृत्तत्वस्यचेति चस्त्वर्थे सपक्षत्वं निश्चितसाध्यवत्वं पक्षेपक्षांतर्भावेन तस्य असाधारण्यस्य ज्ञान विरोधित्वं सामानाधिकरण्यज्ञानविरोधित्वं साध्यवद्वृत्तित्वसामान्याभावज्ञानमेव साध्यसामानाधिकरण्यसामान्यज्ञानाविरोधी नतु तद्विशेषाभावात्मक सपक्षव्यावृत्तत्वज्ञानमपीतिभावः। अथात्र विरुद्धहेतवो यद्यलक्ष्या स्तदा सपक्षवृत्तित्वाद्यभावादिक मादाय सर्वेषु तेष्वतिव्याप्तिः तेषां लक्ष्यत्वे साध्यसामानाधिकरण्यग्रहाविरोधित्वोपादान मनर्थक मितिचेन्न। दुष्टहेतुलक्षणे विरुद्धालक्ष्या एव उक्तविशेषणोपादानेच दोषलक्षणे विरोधातिव्याप्ति वारणायैवसपक्षविपक्षव्यावृत्तत्वस्या साधारण्यस्येत्यत्र विपक्षपदं संपातायातमित्यवधेयं। अत्रच यद्रूपविशिष्टविषयंकत्वेना नुमिति जनकता तद्रूपावच्छिन्नाभावो ऽवश्यं विवक्षणीयः। अन्यथा सपक्षसत्वादे र्द्वित्वावच्छिन्नाभाव मादायातिप्रसंगापातात्। एवंच निश्चितसाध्यवद्वृत्तित्वत्वावच्छिन्नाभावा संग्रहः निश्चयांश-

ज्ञानस्या नुमित्यहेतुतया तद्घटित तादृशविशिष्टविषयतावत्त्वेना नुमिति हेतुत्वाभावात् । येनकेनापिरूपेण यद्रूपाश्रयनिरूपितविषयितावत्वेना जनकताविवक्षणेच द्वित्वावच्छिन्नाभाववारण मशक्यमेवेति दूषणमशक्यसमाधान मित्यवधेयं उपदर्शित साधारणासाधारणयोः संग्रहाय मिश्राअन्यथैवैतल्लक्षणं व्याचक्षते तदुपन्यस्यति पक्षवृत्ताविति । पक्षावृत्तित्वंच नपक्षवृत्तौविरोधश्च नविरुद्धभिन्नेवर्तत इति न पर्वतोवन्हिमान्महानसत्वात् न्हृदत्वाद्वा इत्याद्योः स्वरूपासिद्धविरुद्धयो रतिव्याप्तिः सपक्षविपक्षवृत्तित्वं तद्व्यावृत्तत्वंच पक्षवृत्तौ विरुद्धभिन्नेच वर्ततइति तदादाय उपदर्शितसाधारणासाधारणयोः संग्रहः । एतत्कल्पेपि पूर्ववद्विरुद्धालक्ष्या एव विरोधस्य व्यभिचारता वारणायैव विरुद्धान्यवृत्तित्वो पादान मेवेत्यवधेयं अत्रच हेतुतावच्छेदक संबंधेन पक्षवृत्तित्वविवक्षण मावश्यक मन्यथा हेतुतावच्छेदकसंबंधेनपक्षावृत्तेरपि येनकेनचित्संबंधेन पक्षवृत्तितया स्वरूपासिद्धेरपि पक्षवृत्तितया तद्वारणसंभवात् । एवंच हेतुतावच्छेदकसंबंधेनपक्षवृत्तित्वं यत्राप्रसिद्धं तादृश व्यभिचारिण्यव्याप्तिः । एवंगगने साध्यनिश्चयदशायां घटः शब्दवान्घटत्वादित्यादौ असाधारण्येऽव्याप्तिः सपक्षव्यावृत्तत्वस्य विरुद्धएव वर्तमानत्वादित्यस्वरसः कश्चिदित्यनेनसूचितः । ननु पूर्वपक्षयथोक्त लक्षणावलंबनेन सिद्धांतप्रणयनमसंगतं तत्तदोषाणां जागरूकत्वादित्याशंकांनिराकरोति । पूर्वोक्तेति । यथामतमिति । यद्यन्मतमालंब्ययद्यल्लक्षणमभिहितं तत्तन्मतेतत्रतत्रनाव्याप्त्यादि संभावनेत्यर्थः तत्रासाधारण्यस्य साधारण्यस्यच संशायकतामते प्रथमलक्षणं व्याप्तिग्रहादिविरोधितामतेच तादृशविरोधिताघटितलक्षणं तेन विरोधित्व घटितलक्षणलक्ष्येविरुद्धे संशयप्रयोजकस्य सपक्षवृत्तित्वघटितसाधारण्यस्य विपक्षव्यावृत्तत्वघटितासाधारण्यस्यच विरहेपि प्रथमलक्षणस्यनाव्याप्तिः प्रथमलक्षणालक्ष्ये तत्र विरोधिताघटितलक्षणस्यवा नातिव्याप्तिरितिभावः । तेषां कोटिद्वयोपस्थापकतावच्छेदकत्वादिरूपानुगतधर्मावच्छिन्नानां तादृशरूपाद्यात्मकलक्षणानां हेत्वाभासतावच्छेदकत्वं । अनुमितिप्रति-

बंधकतायां विषयतयाऽवच्छेदकत्वं विभागमात्रेति मात्रपदेनदुष्टत्वव्यवहारव्यवच्छेदः । दुष्टत्वव्यवहारनियामकोऽनुमितिप्रतिबंधकतावच्छेदकधर्मएव विभाजकइतिनियमे मानाभावादितिभावः । नन्वत्रलक्षणे पक्षधर्मतापदानुपादाना न्नित्यत्वादिसाध्यकस्थले कोटिद्वयोपस्थापकसाधारणधर्मवत्ताज्ञानविषयीभूते घ्यणुकादौ अतिव्याप्तिरित्याशंकां निराचिकीर्षु रभिप्रायंवर्णयति संदेहमित्यादिना एवकारेण कोटयुपस्थितौतादृशरूपेणहेतुताव्यवच्छेदः तादृशधर्मेति साधारण्यादिविशिष्टधर्मेत्यर्थः । मात्रपदेन धर्मिविषयकत्वस्य कोटिद्वयोपस्थितिजनकतावच्छेदकघटकत्वव्यवच्छेदः तथाच कोटिद्वयोपस्थितिजनकतावच्छेदकीभूता या विषयता तदवच्छेदकधर्मवत्वं नोक्तस्थलेद्व्यणुकादौ अणुत्वादिविषयतायाएव तथात्वादिति नातिव्याप्तिरितिभावः । अथैतन्मते संशयंप्रतिसाधारणधर्मवद्धर्मिज्ञानत्वेनहेतुताया आधिक्यात् (१) गौरवमिति चेन्न भवन्मतेपि कोटिद्वयोपस्थितिंप्रति तेनरूपेणहेतुतायाआधिक्यात् संबंधिहस्त्यादिविशेष्यकज्ञाना द्धस्तिपकादिस्मृतेरिव तत्कोटिसहचरितधर्मविशेष्यकज्ञानादपि तत्कोटिस्मृते र्निर्विवादतया साधारणधर्मविषयकज्ञानत्वेन कोटयुपस्थितिहेतुताया उभयवादिसिद्धत्वात् । तस्मात्कोटयुपस्थितौ साधारणधर्मवद्धर्मिज्ञानत्वेन संशयंप्रतिच साधारणधर्मवद्धर्मिज्ञानजन्यकोटयुपस्थितित्वेनहेतुत्वमिति पूर्वपक्षलक्षणोपष्टंभकमतापेक्षया संशयंप्रति साधारणधर्मवद्धर्मिज्ञानत्वेन साधारणधर्मज्ञानजन्यकोटयुपस्थितित्वेनच हेतुतामतमेवसयुक्तिकं अथास्तुकोटयुपस्थितौ साधारणधर्मज्ञानत्वेनैव हेतुता तथापि संशयेधर्मिभाननियमाय तत्रसाधारणधर्मवद्धर्मिज्ञानत्वेनहेतुत्वमफलं कोटयुपस्थितेः संशयहेतुतायां साधारणधर्मज्ञानजन्यत्वनिवेशस्थाने साधारणधर्मवद्धर्मिज्ञानजन्यत्व निवेशनादेव तन्नियमोपपत्तेः । स्वतंत्रकारणताकल्पनापेक्षया क्लृप्तकारणताया मवच्छेदकगौरवस्यैवोचितत्वात् नच धर्मिज्ञानस्य संशयेसाक्षाद्धेतुताया अपिक्लृप्तत्वात्तत्रसाधार-

(१) टिप्पणी—तदति रिक्त कारणत्व कल्पना दित्यर्थः ।

णधर्मप्रकारकत्वमात्रं निवेश्यत इतिनास्माकमपि स्वतंत्रकारणताकल्पनं मानसेपि विप्रतिपत्तिवाक्याधीनसंशये कोट्योरिव धर्मिणोपि पदजन्यैवोपस्थितिः कारणमिति पदजन्यत्वेनधर्मिज्ञानस्य विप्रतिपत्तिजन्यसंशये पृथक्कारणतायाआवश्यकत्वा त्तदन्यसंशयकारणतायां साधारणधर्मादिविषयकत्वांतर्भावेबाधकाभावादितिवाच्यं संशये साधारणासाधारणधर्मवद्धर्मिज्ञानत्वेन हेतुताद्वयस्य तादृशधर्मज्ञानजन्यकोट्युपस्थितित्वेन हेतुताद्वयस्यच कल्पनापेक्षया तादृशतादृशधर्मविषयकत्वमनंतर्भाव्य धर्मिज्ञानहेतुताया स्तादृशतादृशधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितित्वेन हेतुताद्वयस्यच्च कल्पनास्फुटतरलाघवात् मैवं कोट्युपस्थितिकारणतायां तत्तत्कोटिसहचरितधर्मवद्धर्मिविशेषविषयकज्ञानजन्यत्वानिवेशे धर्मभेदेनगुरुधर्मानवच्छिन्नकारणताया आनंत्यापत्ते स्तदपेक्षया धर्मिविशेषमनंतर्भाव्य तत्तत्कोटिसहचरितधर्मज्ञानजन्य कोट्युपस्थितित्वेन धर्मिविशेष मंतर्भाव्य साधारणधर्मवद्धर्मिज्ञानत्वेन लघुशरीरेण हेतुत्वस्यच कल्पयितु युक्तत्वात् नचोपस्थितिकारणतावच्छेदकशरीरे धर्मिणोऽमंतर्भावेपि कार्य्यतावच्छेदकीभूत संशयत्वस्य धर्मिविषयताघटितत्वात् कोट्युपस्थिते धर्मिभेदेनकारणताभेद आवश्यकइतिवाच्यं संशयत्वशरीरे धर्मिविशेषविषयताया विशेष्यतात्वेन किंचित्धर्मावच्छिन्नविशेष्यतात्वेनैव वासामान्यतोनिवेशनीयतया धर्मिभेदेनकारणताभेदानावश्यकत्वादितिदिक्। पूर्वलक्षणोक्तातिप्रसंगवारणाय साध्यसंदेहजनकत्वस्य कोट्युपस्थितिविशेषणताया आवश्यकत्वा त्तदुपस्थापकपदानुपादाननिबंधनं तदनिवेशभ्रमं निराकुरुते। साध्यसंदेहेति प्रकृतप्रकरणवशा त्सामान्यशब्दस्यविशेषपरतयाप्राप्तं तथाच साध्यसंदेहजनिका या साध्योपस्थिति स्तज्जनकतावच्छेदिकासती तथाविधसाध्याभावोपस्थितिजनकतावच्छेदकीभूता या विषयता तदवच्छेदकतापर्य्याप्त्यधिकरणधर्मवत्वं तत्वमिति पूर्वोक्तदिशा लक्षणार्थोनिष्कर्षयितव्यः वन्हिसाहचर्य्य वन्ह्यभाववद्व्यावृत्तत्वावच्छिन्न धूमादिविषयतायाः पूर्वोपदर्शितरीत्या तथाविधसाध्यसाध्याभावोपस्थितिजनकतावच्छेदकत्वेपि तामा-

दायातिप्रसंगः पूर्ववदेववारणीयः समवायादिघटितसाधारण्यमादाय संयोगादिना धूमादेर्वन्ह्यादिसाध्यक सव्यभिचारतावारणाय प्रकृतहेतुतावच्छेदक संबंधेनयत्साध्यवद्वृत्तित्वं साध्याभाववद्वृत्तित्वंच तद्घटितत्वेन विषयतावच्छेदकधर्मोविवक्षणीयः असाधारण्यशरीरेप्यभावप्रतियोगितया तेनसंबंधेन साध्यादिमद्वृत्तित्वनिवेशा न्नतदसंग्रहः साधारणधर्मवद्धर्मिज्ञानसत्वे उद्बोधकांतराधीनकोटिस्मरणा दनुभवात्मककोट्युपस्थितेश्च संशयोपगमे क्षतिविरहात् विशेषणज्ञानादिमुद्रया कोट्युपस्थितिहेतुतयैवोपपत्तेः साधारणधर्मज्ञानजन्यकोट्युपस्थितित्वेन स्वतंत्रहेतुताकल्पनमनर्थकमिति व्याख्यातकल्पे साध्यसंदेहजनकत्वरूप कोट्युपस्थितिविशेषणस्याव्यावर्तकतया बिलक्षणजनकतायाश्चासत्वेन निवेशनासंभवा दुक्तातिप्रसंगो (१) दुर्वारएवेत्यभिप्रेत्य तादृशनिष्कृष्टमते प्रकारांतरेण लक्षणंव्याचष्टे यथाकथंचिदिति साधारणधर्मज्ञान जन्यांतदजन्यावेत्यर्थः विशेषणज्ञानादिमुद्रया क्लृप्तकरणतातएव निर्वाहो नतु स्वातंत्र्येण तद्धेतुत्वमितिसूचयितुं स्मृत्यनुभवसाधारणीति नन्वेवं साधारण्यादिविशिष्टधर्मवत्ताज्ञानसमकाले कथंनसंशय इत्यतआह नियामकमिति नियामकैतादृशधर्मदर्शनदशायामेव संशयइति नियमनिर्वाहकंसाधारण्यादीत्यस्य साक्षात्संशयहेतुत्वमतमित्यादिः आदिपदादसाधारण्यपरिग्रहः अनुभवसाधारण्याः कोट्युपस्थितेर्हेतुत्वादे व धारावाहीसंदेहः अविरलक्रमोत्पन्न संदेहत्रितयादिकं साधारणधर्मज्ञानजन्य कोट्युपस्थितित्वेन संशयहेतुत्वे स्मरणात्मककोट्युपस्थितेरेव तथात्वात् साधारणधर्मविषयकज्ञानजन्यकोट्युपस्थित्या संशयद्वयजननसंभवेपि संशयांतरोत्पत्तौ तथाविध स्मृत्यात्मकोपस्थित्यंतरस्यापेक्षणीयतया अविरलक्रमोत्पन्नसंशयत्रितयादिकं नोपपद्यते एतन्मतेतु संशयात्मककोट्युपस्थित्यादेरपि संशयान्तरोत्यादादसंभवेनांतरा कोटिस्मरणानपेक्षणा त्साधारणधर्मविषयक द्वितीयादिसंशया त्तदग्रिमक्षणेषु संशयांतरोत्पादे बाधका भावः नचा-

(१) टिप्पणी — अयं निम्नो ज्ञाना दित्यादो ज्ञाने। ॥ इति गंगाधर कृत टिप्पणी समाप्ता ॥

शून्य

बद्धर्मि

गादा०
३७

मक कोटि ज्ञानस्यापि साधारण धर्मवत्ता ज्ञान जन्यतया ·

स्यमतेपि संशयनिष्ठतादृशज्ञानजन्यतयो रननुगततया स्मृतिनिष्ठजन्यतायाएव निवेशनीयतया ऽवान्तर कोटिस्मृतिंविनैव २-त संशयांतरोत्पादः संभवतीतिवाच्यं। अवच्छेदकभेदेनभिन्नयोः स्मृति संशयनिष्ठतादृशज्ञानजन्यतयो रननुगतायाः स्मृतिनिष्ठज-न्यताया एव निवेशनयितया स्मरणापेक्षाया आवश्यकत्वादितिभावः स्वसामानाधिकरण्यावच्छिन्न स्वाव्यवहितोत्तरत्वसंबंधेन साधारणधर्मज्ञानविशिष्टोपस्थितित्वेन हेतुत्वोपगमेपि संशयादपिसंशयः संभवती तिगौरवमेवोपस्थितेः स्वतंत्रहेतुतायां वाध-कमित्यवधेयं। धर्मितावच्छेदकेति। धूमवानूपर्वतो वन्हिमान्नवेतिसंशये धर्मितावच्छेदकप्रकारकज्ञानमुद्रया पर्वतत्वाद्यवच्छिन्न-विशेष्यक धूमत्वादिविशिष्टवत्ताज्ञानस्य जनकतया धूमत्वादिमत्वमादायां तिप्रसंगवारणाय धर्मितावच्छेदकविशिष्टेति धर्मि-तावच्छेदकपदं फलीभूतसंशयधर्मितावच्छेदकतापर्य्याप्त्यधिकरणधर्मपरं अन्यथापर्वतत्वादेरपि दर्शित संशयधर्मितावच्छेदकघट-कतया उक्तातिप्रसंगवारणासंभवात्। एवंच तद्धर्मपर्य्याप्तधर्मितावच्छेदकताक यत्किंचित् संशयनिरूपितायां जनकताया मवच्छेद-कीभूतायाः तद्धर्मनिष्ठ धर्मितावच्छेदकतानिरूपकप्रकारता तन्निरूपितावच्छेदकता पर्य्याप्त्यधिकरणधर्मवत्वमिति प्राङ्निरू-विशेष्यता पकोर्थः पर्य्यवसितः तेन सत्तावानूजातेरित्यादौ सत्ताभाववत्समवेतत्वा प्रसिद्ध्या यद्रूपपदेन सत्तावत्समवेतत्व मात्रोपादानसं-भवे नातिव्याप्तिरितिपरास्तं। वक्तव्यंव्याख्येयं एवंच मूलस्थमुभयकोट्युपस्थापकपदं संशायकार्थ मित्यभिप्रायः मूलमुपेक्ष्य निष्कृष्टमते स्वातंत्र्येणैवैत्तल्लक्षण मितिकेचित् प्राचीनास्तु साधारण्याद्यवच्छिन्न प्रकारताशालिज्ञानत्वेन नसंशयजनकता पुरुष-त्वतदभावसहचरितत्वेन यदाकदाचित् ज्ञानस्यो र्ध्वत्वादे रूर्ध्वत्ववत्वादिमात्रेण ज्ञानादप्ययं पुरुषोनवेति संशयात् किंत्वनुद्बुद्धसं-स्कारान्य साधारण्यादिप्रकारक विशिष्टधर्मिज्ञानत्वेनैव साधारण्यादिप्रकारकत्वंच संस्कारज्ञानसाधारणं अत स्तत्प्रकारकज्ञाना- ३७ सत्वेपि तज्जन्य तथाविधसंस्कारविशिष्टोर्ध्वत्वादिज्ञानात् संशयनिर्वाहः वैशिष्ट्यंच स्वविशेष्यतावच्छेदकावच्छिन्नप्रकारताकत्व

स्वसामानाधिकरण्योभयसंबंधेन अंत एकधर्मावच्छिन्नविशेष्यक साधारण्यादिप्रकारकज्ञानादिसहितात् अपरधर्मावच्छिन्नप्रकारकधर्मिज्ञाना न्नसंशयः ईदृशापत्तिवारणायैव एकविशिष्टापरस्य हेतुतास्वीक्रियते नतूभयोः पृथक्कारणतां एकविशिष्टापरत्वेन हेतुत्वे विशेष्यविशेषणभावे विनिगमनाविरहेणकारणताद्वयमांत्रं पृथक्कारणतामतेतु एकधर्मावच्छिन्नविशेष्यक साधारण्यादि प्रकारकज्ञानादिसाहिता दन्यधर्मावच्छिन्नप्रकारक धर्मिज्ञाना त्संशयापत्ते स्तत्तद्धर्मावच्छिन्नविशेष्यक साधारण्यादिप्रकारकत्वेन तत्तद्धर्मावच्छिन्नप्रकारकधर्मिज्ञानत्वेन च हेतुताकल्पनमंतरेण दुर्वारतया तादृशहेतुतास्वीकारे ऊर्द्धत्ववत्वादिरूप विषयतावच्छेदकानंत धर्मभेदेन हेतुताया आनंत्यंस्यादितिवदंति तन्मते यथाव्याख्यातलक्षणे शुद्धधूमत्वाद्यवच्छिन्नप्रकारताया अपि वन्ह्यादिसंदेहजनकतावच्छेदकत्वात् शुद्धधूमत्वादिकमादायातिप्रसंगवारणमशक्यमिति तन्मते कल्पांतरमाह कोटिद्वयेति ऊर्द्धत्वत्वादिनेत्यस्य केवलेनेत्यादिः तदानीं संशयप्राक्काले यद्रूपेति यद्रूपप्रकारक विशिष्टत्वेन यत्किंचित्संशयजनकता तद्रूपवत्वमित्यर्थः यत्किंचित् संशयजनकतावच्छेदकतावच्छेदकत्वनिरूपिताया निरूपकत्वंसंसर्गावच्छिन्नावच्छेदकता तदाश्रयविषयता पर्य्याप्त्यधिकरणधर्मवत्वं यत्किंचित्संशयजनकतावच्छेदकतावच्छेदक वैशिष्ट्यघटक विशेष्यतानिरूपितप्रकारता पर्य्याप्त्यधिकरण धर्मवत्वमिति वा पर्य्यवसितार्थः तच्चेत्यादिमूलग्रंथः साधारण्यासाधारण्य संशयप्रयोजकरूपमादाय लक्षणसंगमनपरः तत्र यादृशासाधारण्यस्य संशयप्रयोजकत्वं विचारसहं तत्सद्धेतुसाधारणमिति दोषेण लक्षणान्तरमुत्थापयितुं तादृशग्रंथं धारयति तच्चेत्यादीति असाधारण्यं संशयप्रयोजकीभूतासाधारण्यपदार्थः वृत्तिमतइति तथाच शद्बोनित्यः शद्बत्वादित्यादावसाधारण्येऽव्याप्ति रितिभावः ननु वृत्तिमतो ना साधारण्य मुपगंतव्यं किंत्ववृत्तेरेवेति नैतद्दोषावकाश इत्यतआह एककोटीति व्याप्यस्य व्याप्यतयागृहीतस्य व्यावृत्तस्य तद्व्यवृत्तित्वेनगृहीतस्य एतेन एककोटिमद्व्यावृत्तस्यैक कोटिव्याप्यतया आवश्य-

कत्वेपि नभेदघटितइवा र्थासंगतिः तद्दवृत्तित्वंच न तदभावव्याप्यत्वं तच्छरीरे तदभावाभावत्वेन तस्यानिवेशा दित्यवधेयं विशेषदर्शनतया विरोधिधर्मदर्शनतया संशयविरोधित्वादिति पुरुषत्वाभावाभाववद्वृत्तिशाखादि मानयमित्याकारकनिश्चयदशाया मिव पुरुषावृत्तिशाखादिमा नित्यादिनिश्चयदशायामपि पुरुषत्वादिविशिष्टबुद्ध्यनुत्पादस्य सर्वानुभवसिद्धत्वात्त द्विशिष्टबुद्धौ तद्दवृत्तित्वेन गृहीतधर्मवत्ताज्ञानस्य प्रतिबंधकताया आवश्यकत्वादितिभावः तथाच निरूक्ता साधारण्यविशिष्टधर्मवत्ताज्ञानस्य संशयप्रतिबंधकतया संशयज्ञनकत्वासंभवा त्कथं तादृशासाधारण्यस्य संशयप्रयोजकता नच तादृशज्ञानस्य संशयप्रतिबंधक-त्वेपि तज्जन्यकोट्युपस्थितेः संशयजनकत्वं संभवत्येव तन्नाशानंतरं तज्जन्यकोट्युपस्थित्या संशयजनकत्वासंभवात् असाधारण-धर्मवद्धर्मिज्ञानस्य बाधकत्वा त्साक्षाद्धेतुत्वासंभवेन तज्जन्यकोट्युपस्थितित्वेन हेतुतायां गौरवस्याकिंचित्करत्वादितितादृशका-र्यकारणभावघटितलक्षणपरतयैव मूलं व्याख्येयमिति वाच्यं अग्रेनिर्वाच्यस्या साधारण्यस्यबुद्धेः संशयाविरोधितया तज्ज्ञानस्यैव साक्षात्संशयजनकत्वसंभवेन गौरवा दुक्तरूपेण कोट्युपस्थिते रहेतुत्वात् कोटिस्मृतिजनकताघटितलक्षणस्या संभवा त्संशय-जनकताघटितलक्षणकरणे च तादृशासाधारण्यमादाय व्याप्यविरुद्धयो रतिव्याप्तिः ननु सत्प्रतिपक्षसंबलनदशायामिव कोटिद्व-यवद्व्यावृत्तधर्मवत्ताज्ञानदशायामपि संशयोत्पत्तिरनुभवसिद्धैवेति तदभाव व्याप्यवत्ताज्ञानप्रतिबंधकतायां तद्व्याप्यवत्ताज्ञानस्येव तत्कोटिमदवृत्तिधर्म्मवत्ताज्ञानप्रतिबंधकताया मपि तदभाववद्वृत्तिधर्मवत्ता ज्ञानस्योत्तेजकत्व मगत्या कल्पनीय मिति कोटिद्वय-वद्व्यावृत्तधर्मवत्ताज्ञानस्य संशायकत्व मव्याहतमेव येनरूपेणप्रतिबंधकता तेनैवरूपेण जनकत्वानभ्युपगमादित्यतआह। सत्प्र तिपक्षइति। विरोधिकोटिद्वयव्याप्यवत्ताज्ञानसमयइत्यर्थः परामर्शेप्रामाण्यसंशयेति। तथाच तुल्ययुक्त्या प्रकृतेपि तत्तत्कोटि-मदवृत्तित्वविशिष्टवत्ताज्ञाने प्रामाण्यसंशयादेव संशयः स्वीक्रियतइति नैककोटिमद्व्यावृत्तधर्मवत्ताज्ञानप्रतिबंधकताया मपरको- ३८

टिमद्व्यावृत्तधर्मवत्ताज्ञानस्योत्तेजकत्वं प्रामाणिक मप्रामाण्यज्ञानोत्तेजकतयैवोपपत्तेः अप्रामाण्यज्ञानानास्कंदितस्यैव ज्ञानस्य जनकतया निरुक्तासाधारण्यस्य बुद्धे र्जनकत्वोपगमे प्रतिबंधकतावच्छेदकरूपेणैव जनकताप्रसंगइतिभावः निश्चितसाध्यतदभाव-वद्व्यावृत्तत्वमिति आसाधारण्यमित्यनुषज्यते येनयेनरुपेणेति यद्यद्रूपंधर्मितावच्छेदकीकृत्येत्यर्थः (१) तेनतेनरूपेण तत्तद्व्यावृत्तत्वं तत्तद्धर्मविशिष्ट तत्तद्धर्मिव्यावृत्तत्वं प्रमेयत्वादिसामानाधिकरण्येन घटादौ साध्यादिनिश्चयदशायामपि शब्दोऽनित्यः शब्दत्वादि-त्यादा वसाधारण्यसत्वा द्धर्मिनिवेशः प्रथमपक्षे वक्ष्यमाणाया निर्द्धर्मितावच्छेदकक साध्यनिश्चयविषयवृत्तिहेतो रसाधारण्यानुपप-त्तेर्वारणायघटत्वादिना साध्यादिनिश्चयदशायां रूपांतरावच्छिन्न घटादिव्यावृत्तत्व ज्ञानात्संशयापत्तिवारणाय च धर्मितावच्छेद-कनिवेशः साध्यव्याप्यवत्वेन पक्षातिरिक्तमात्रविषयक निश्चयदशाया मसाधारण्यानुपपत्त्यनवकाशात् पक्षस्यापि निश्चयविषयत्व माविष्कर्तुं सर्वाणीति । सर्वपदेन सर्वत्वावच्छिन्नोद्देश्यताकबोधः केवलान्वयि सर्वत्वाद्यवच्छेदेन विधेयविषयकएव जन्यतइति तथाविधबोधस्यैव सर्वाणि साध्यवंती त्याकारकता तथाच विशिष्यपक्षे साध्यनिश्चयदशायामिव साध्यसंदेहविरोधिनः सर्वाणि-साध्यवंतीति निश्चयस्य सत्वे प्यसाधारण्याभावस्येष्टत्वा त्साध्यव्याप्यवंतीतिं तथाचै तादृशनिश्चयदशायां विशिष्यपक्षे साध्यसंदे-हस्या निवृत्ते स्तादृश निश्चयस्य ना साधारण्यक्षतिकारकत्व मितिभावः प्रथमपक्षे धर्मितावच्छेदकानिवेशा त्सामान्यधर्माव-च्छिन्नधर्मिकं विशिष्य संशयानिवर्तकं निर्णयमिव निर्द्धर्मितावच्छेदकतया अप्रसक्तसंशयनिवर्तकताक निश्चयमादायापि दोष-दानं संभवतीतिनिर्द्धर्मितावच्छेदकतया अप्रसक्तसंशयनिवर्तकताक निश्चयमादायापि दोषदानं संभवतीत्य भिप्रेत्याह सर्वाणिवेति

(१) टिप्पणी—धर्मिता निरूपिता वच्छेदकतात्वा वच्छिन्नप्रतियोगिताक पर्य्याप्तनुयोगिता वच्छेदकं यद्यद्रूपं तत्तद्रूपविशिष्ट यद्य द्धर्मिणिसाध्यादि-मत्ता निश्चय स्तत्तद्धर्म्मावच्छिन्न धर्मिवृत्त्यसंताभावप्रतियोगिता वच्छेदक धर्म्मवत्व मसाधारण्य मितियावत् ॥

पूर्ववत्साध्यवत्वेन पक्षस्यापि निश्चयविषयत्वं स्फुटीकर्तुं सर्वाणीति । साध्यवत्वावच्छिन्ने सर्वत्वविधेयकस्य साध्यवंति सर्वाणी-
त्याकारकज्ञानस्य पक्षाविषयकस्यापि संभवात् सर्वसाध्यवदुद्देश्यक प्रमेयत्वविषयकज्ञानानुसरणंतादृशज्ञानस्य वस्तुत्वव्यापक
सर्वत्वावच्छेदेन साध्यवत्वानवगाहितया तत्सत्वं न पक्षेसाध्यसंदेहनिवर्तक मिति तदानी मसाधारण्य मक्षतमेवेतिभाव: आ-
दिपदात् शद्बोनित्य: शद्बत्वादित्यादौ सर्वाणि साध्याभावव्याप्यवंति साध्याभाववंतीत्यादिनिश्चयपरिग्रह: साध्यादीत्यादि पदा
त्साध्याभावपरिग्रह: अतथात्व मसाधारण्याभाव: द्वितीयपक्षे तत्तद्व्यक्तित्व रूप धर्मितावच्छेदकविवक्षणे प्रथमदोषस्य द्वितीय-
दोषस्यच यथाश्रुते प्यनवकाशात् तत्रदोषांतरमाह द्वितीयेत्विति विशिष्यधर्मितावच्छेदकप्रकारेण सामान्यत: पक्षे साध्यवत्ता-
निश्चयं विना पक्षमात्रवृत्तिहेतौ साध्यवद्वृत्तित्वघटित व्याप्तिनिश्चयएव नसंभवतीत्यभिप्रेत्य एतदभिहितं अथवा विशिष्याविशेष
धर्मे धर्मितावच्छेदकीकृत्य उक्तविवक्षणे सामान्यधर्मधर्मितावच्छेदकक निश्चयदशाया मप्येतद्दोषस्य संभवात् तादृशस्थलसंग्र-
हाय तादृशधर्मस्य धर्मितावच्छेदकत्वानुसरणं विशेषलक्षणस्य विशेषणादित्यग्रिमेणान्वय: वैशिष्ट्यंच सामानाधिकरण्यप्रत्या-
सत्याबोध्यं तदविशेषितस्यैव तस्य संशयप्रयोजकतया सव्यभिचारसामान्यलक्षणस्यातिव्याप्तिवारयितुमाह साधारण्येति एतच्च
व्याप्तिग्रहदशायां साधारणसंग्रहाय वैशिष्ट्यं विशेषणताविशेष्यत्वोभयघटितसामानाधिकरण्येन बोध्यं केचिदपीति व्याप्तिग्रहशू-
न्यपुरुषंप्रत्यपीत्यर्थ: नच तत्पुरुषीयव्याप्तिग्रहाभाव: तत्पुरुषीयासाधारण्यादिलक्षणेनिवेशनीय इति नायंदोष इत्यतआह स्यादिति
तदपि सामान्यसव्यभिचारत्वमपि तत्तत्पुरुषघटितामिति तथाचा साधारणवत् साधारणेपि पुरुषविशेषनियंत्रित सव्यभिचारव्य-
वहारापत्ति धूमादौ साध्ये वन्ह्यादि रमुकं प्रति व्यभिचारीति व्यवहाराभावेनेष्टापत्ते रयोगादितिभाव: यथाश्रुतैतत्कल्पे प्रथ-
मपक्षीयदोषमप्याह साध्यादीति आदिपदा त्साध्याभावपरिग्रह: ननु तदानीमसाधारण्याभावेपि तद्भ्रमादेवानुमितिप्रतिबंध ३९

इतिशंकां निराचिकीर्षु स्तद्भ्रमाभाव मप्युपपादयति नहीति तदानीं पक्षेसाध्यसंदेहदशायां तदानी मत्र तद्व्याप्यवत्तासंशय-स्या प्यौचित्यातीर्जतत्वात् व्याप्यवद्वृत्तित्वस्यापि हेतौ संशयादितिभावः एतेन उक्तस्थलेलक्षणाव्याप्तिरतोऽसाधारण्यनिश्चयरू-पकारणाभावेन संशयानुपपत्तिरपि प्रदर्शिता उक्तविवक्षाया मेतद्दोषानवकाशात् साधारणे पुरुषविशेषनियंत्रित सव्यभिचार-व्यवहारे कदाचिदिष्टापत्तेः संभवात् दोषांतरमाहा भिहितंचेति पूर्ववृत्तित्वादिना अयं घट एतत्वादित्यादि पूर्वपक्षीय पंक्तिव्या-ख्यानावसर इतिशेषः न संशयप्रयोजकमिति तथाच तदादायासाधारणे न लक्षणसंगमन संभव इतिभावः ननु तर्हिकीदृश मसाधारण्यं संशयप्रयोजक मतआह किंत्विति तत्सहचरितेति साध्यतदभावसहचरितेत्यर्थः एतादृशासाधारण्यस्यच नहेतु-दोषतासंभवः सद्धेतुसाधारण्यादेरनुमितिप्रतिबंधकज्ञानाविषयत्वेन दोषसामान्यलक्षणानाक्रांतत्वा च्चेतिभावः ननु व्याप्यविरु-द्धसाधारणस्यै तादृशधर्मस्य संशयप्रयोजकत्वे व्याप्यादिदर्शनादपि संशयापत्ति रित्यतआह व्याप्यविरूद्धयोरिति व्याप्त्यादि-ग्रहः संशयकाले व्याप्त्यादिदर्शनस्य संशयाप्रतिबंधकतयातेननिश्चितयोरिति व्याप्यत्वादिना अनिश्चितस्य व्याप्यादेर्निरूक्त रूप-ज्ञाना त्संशय इष्टएवेतिभावः विरुद्धान्यत्वस्य हेतुविशेषणत्वे असाधारणासंग्रहः विरोधपदार्थं साध्यासामानाधिकरण्यादि र्वानिवेश्य तदन्यत्वेनानुमितिविरोधिविशेषणेपि साध्याप्रसिद्ध्यादिवारणासंभव इत्यतआह विशिष्टेति साध्यतावच्छेदकादिवि-शिष्टेत्यर्थः एतदर्थः पूर्वपक्षएवविवृतः यथाश्रुतमूलतो धर्मिविशेषणताया एव लाभा दर्थतइति तात्पर्य्यवत्त्वज इत्यर्थः विरो-धिविशेषणं अनुमितिविरोधिविशेषणं अवृत्तित्वे परस्परासामानाधिकरण्येऽत्र साध्यसाधनयो रित्यनुषज्यते पक्षतानिवेशे प्रयो-जनाभावादाह पक्षपदमिति पक्षवृत्तित्वस्य धर्मिविशेषणत्वे स्वरूपासिद्धस्य व्यभिचारिणो ऽसंग्रहप्रसंगो हेतौ पक्षवृत्तित्वग्रहा-विरोधित्वेन विरोधिविशेषणेपि वाधसत्प्रतिपक्षातिप्रसंग वारणाशक्यमेवेति एवंच सपक्षवृत्तित्वेसत्यनुमितिविरोधिसंबंधाव्या-

वृत्तिरितिदलद्वयेन व्याप्तिग्रहविरोधिधर्मवत्वस्य विवक्षणे च मणिकारमतसिद्धस्य साध्यव्यापकीभूताभावप्रतियोगित्वरूपा साधारण्यस्या संग्रहः विशेषणांतरं प्रक्षिप्य वाधादिवारणेच गौरव मित्याभिप्रेत्यपूर्वपक्षोक्तरीतिं परित्यज्य प्रकारांतरेण वाधादिकं वारयितु मुक्तदलद्वयनिष्कृष्टार्थमाह तथाचेति यद्यद्धर्मेति सधर्मितावच्छेदक हेतुमत्तानिश्चयकालीन यादृशविशिष्टविषयकनिश्चयसामान्यं स्वसमानकालीन हेतुमत्तानिश्चयसमानधर्मितावच्छेदकानुमितिसामान्ये प्रतिबंधकं तादृशधर्मवत्वमित्यर्थः समूहालंबनात्मकस्योदासीनपदार्थविषयकनिश्चयस्या प्यनुमितिप्रतिबंधकतया उदासीनपदार्थविषयकनिश्चयसामान्यस्यापि तद्विपरीतविषयकसमूहालंबनात्मकप्रकृतानुमितिप्रतिबंधकतया तत्रातिव्याप्तिवारणाय सामान्यपदद्वयं हेतुमत्ताज्ञानासमानकालीनव्यभिचारनिर्णयस्य व्यभिचारनिर्णयसामान्यांतर्गतस्य स्वसमानकालीनहेतुमत्ताज्ञानाप्रसिद्ध्याऽसंभवः स्यादिति प्रथमं कालीनान्तं निश्चयविशेषणं निर्द्धर्मितावच्छेदकक हेतुमत्तानिश्चयकालीन व्यभिचारनिश्चयकालीन हेतुमत्ताज्ञानधर्मितावच्छेदका प्रसिद्ध्यातद्दोषतादवस्थ्य मतो हेतुमत्ताज्ञाने सधर्मितावच्छेदकत्वविशेषणं अनुमिति सामान्यांतर्गतायां स्वसमानकालीन हेतुमत्ताज्ञानासमानधर्मितावच्छेदकक साध्यानुमितौ हेतुतावच्छेदकावच्छिन्नस्य साध्यव्यापकीभूताभावप्रतियोगित्वज्ञानं न प्रतिबंधकं नित्यत्वव्यापकीभूताभावप्रतियोगिशद्वत्व मित्यादिज्ञानदशाया मयंनित्य इत्यादिज्ञानोत्पत्तावविवादादित्य साधारणाव्याप्ति रतः समानधर्मितावच्छेदकांत मनुमिति विशेषणं तथाच इदंत्वादिधर्मितावच्छेदकक नित्यत्वादिविशिष्टबुद्धौ शब्दत्वादिधर्मिक नित्यत्वादिव्यापकीभूताभावप्रतियोगित्वरूपा नित्यत्वीयव्यतिरेकव्याप्ति निश्चयविशिष्टस्य तद्धर्मितावच्छेदकक शब्दत्वादिमत्ताज्ञानस्य तदभावव्याप्यवत्ताज्ञानमुद्रया प्रतिबंधकत्ववद्विशेषणविशेष्यभावे विनिगमनाविरहेण तादृशब्दशत्वादिमत्ताज्ञानविशिष्टस्य तथाविधव्याप्तिनिश्चयस्यापि प्रतिबंधकतया तादृशहेतुमत्ताज्ञानसमानधर्मितावच्छेदककानुमितिसामान्यप्रातिबंधकत्वं तथाविधा- ४०

साधारण्यनिश्चयस्याक्षत मेवेति असाधारण्यसंग्रहः अनुमितिपदं साध्यव्याप्योहेतुः साध्यवाङ्श्वपक्ष इत्येतादृशसमूहालंबनानुमितिपरं तेन साधारणज्ञानस्य साध्यवत्ताज्ञानाप्रतिबंधकत्वेपि न तदसंग्रहः एतेना नुमितिविरोधित्वं यादृशविशिष्टविषयक निश्चयत्वेनानुमितिप्रतिबंधकं तादृशत्वं तत्रचा वच्छेदकत्वं प्रागुक्तयुक्त्याअनतिरिक्तवृत्तित्वरूपमेव विवक्षणीयं एवंच साध्यव्यापकीभूताभावप्रतियोगिहेतुरितिज्ञानस्य हेतुमत्ताज्ञानासमानकालीनस्य साध्यवत्ताज्ञानाप्रतिबंधकतया तादृशज्ञानविषयस्य निरुक्तलक्षणानाक्रांतत्वेन ना साधारण्यस्वरूपत्वोपपद्यते पक्षवृत्तित्वविशेषितस्यैव तस्य बाधादिवद्धर्मिविशेषघटितमूर्तिकतया नियतपक्षधर्मिका नुमिति विरोधित्वमेव नतु यत्र यत्र हेतुमत्वं ज्ञायते तत्तद्धर्मिका नुमितिसामान्यविरोधित्वमिनि न तथास्व संभव इतिपरास्तं यत्तु हेतुमत्ताज्ञानमनिवेश्य तत्तद्धेतुधर्मिक साध्यव्यापकीभूताभावप्रतियोगित्व निश्चयत्वेनैव प्रतिबंधकता प्रतिबध्यतावच्छेदकंतु धर्मिविशेषविषयकत्वाद्य घटितं तत्तद्धेतुमत्ताज्ञानजन्यानुमितित्व मतः शब्दत्वं नित्यत्वव्यापकीभूताभावप्रतियोगिनि निश्चयसत्वे समानधर्मितावच्छेदकक शब्दत्ववत्तानिश्चयस्य चा सत्वे नित्यत्वाद्यनुमिते र्नानुपपत्तिः तदानींहेत्वंतरज्ञानेनैवा नुमितिजनना त्तस्याश्च शब्दत्व धर्मिक तादृशाभावप्रतियोगित्व निश्चयाप्रतिबध्यत्वात् एवंच पक्षवृत्तित्वा विशेषितंनिरुक्तरूपमेवा साधारण्यं। लक्षणे अनुमितिपदस्य। प्रकृतहेतुकानुमितिपरतया प्रकृतहेतुकानुमितिसामान्याविरोधित्वस्या नतिरिक्तवृत्तित्व रूपावच्छेदकत्वघटितस्यापि तत्रसत्वेन तदसंग्रहाप्रसक्तेरिति समाधानं तत्र शब्दत्वादिधर्मिक तादृशप्रतियोगित्वनिश्चयस्य शब्दत्वादिहेतुमत्ताधीजन्यानुमितित्वावच्छिन्नप्रतिप्रतिबंधकत्वे। तादृशनिश्चयसहकृतशब्दत्वादिप्रकारकनिश्चयदशायां तत्समानधर्मितावच्छेदकक शाब्दबोधाद्यापत्ते रन्यहेतुक तादृशानुमित्यापत्तेश्च दुर्वारितत्वा न्नचान्यहेतुकापि समानधर्मितावच्छेदकक तद्वत्ताज्ञानकालीनानुमिति स्तद्वत्ताज्ञानजन्यैवेति न तदापत्तिसंभव इतिवाच्यं। व्याप्यत्वानवच्छिन्नहेतुप्रकारताशा-

न मना॰ विज्ञाना॰

लिङ्ज्ञानस्या नुमितिजनकत्वे मानाभावात् अन्यलिंगकपरामर्षघटितसामग्र्यां तत्तद्धर्मिक तादृशनिश्चयाभावस्या नंतर्भावेन तद्द- लादापत्तेः कथामात्रेण वारयितुमशक्यत्वाच्च एतेन समानधर्मितावच्छेदकक तद्वत्ताज्ञानानंतरोत्पातिकत्व निवेशेऽपि न निस्तार इत्यल मत्यावशेन। एतन्नये। पक्षवृत्तित्वाविशेषित हेतुनिष्ठसाध्याभावीयान्वयव्याप्ति रप्यसाधारण्यमेवेति न तत्रातिव्याप्ति रित्य- वधेयं। तथा निरुक्तानुमितिसामान्यविरोधि धर्मिविशेषितत्वात् धर्मिविशेषघटितत्वात् न तादृशौ न तादृशानुमितिसामान्य- विरोधिनौ नन्वेवमपि सर्वमाकाशवत् प्रमेयत्वादित्यादिस्थलीय वाधप्रतिरोधयो रतिव्याप्तिः सर्वमाकाशाभाववदित्यादिनिश्चये किंचिदप्याकाशाद्यनुमिते रनुदया दनुभवानुरोधेन। समानधर्मितावच्छेदककज्ञानेपि तत्प्रतिबंधकत्व कल्पना-त्तयो रनुमिति सामा- न्यविरोधित्वा दित्यतआह सर्वमिति इत्यादिकं इत्याकारकज्ञानविषयवाधादिकं अग्रिमविरोधिपदद्वयस्य प्रतिबंधकपरतया इत्या- दिकामित्यस्य इत्याकारकज्ञानमित्येव वार्थः सामानाधिकरण्यग्रहविरोधि साध्यसामानाधिकरण्यस्य साध्यवत्वघटितत्वा दिति शे- षः तथाच अविरोध्यं तेनैव तद्वारणमिति भावः निर्द्धर्मितावच्छेदककज्ञानस्य वाधाद्यप्रतिबध्यत्वे साध्यसामानाधिकरण्य ज्ञानस्य साध्यांशे निर्द्धर्मितावच्छेदककतया तदविरोधित्व मुक्तवाधादेरक्षत मेवेत्याशयेनाहा नुमितीति। व्यभिचारस्यापि प्रकृतसाध्यहेतु- कानुमितिविरोधित्वा त्सामान्येति तथाच तस्यान्यहेतुकानुमित्यविरोधित्वा न्न तदसंग्रहः उक्तवाधादेश्च सर्वहेतुकानुमितिविरोधि- त्वा त्तद्वारणमितिभावः। इदंत्ववधेयं सर्वमाकाशाभाववदित्यादिज्ञानस्या समानधर्मितावच्छेदककानुमितिविरोधित्वे मानाभावः तादृशज्ञानकालेइदमपि सर्वान्तर्गत मित्यादिज्ञानसत्वे एव इदमाकाशवदित्याद्यनुमित्यनुदया त्तत्र च तादृशज्ञानस्यैव ग्राह्याभावाव च्छेदकधर्मदर्शनविधया तादृशानु मित्यभावनिर्वाहकत्वा त्तथाच तादृशवाधबुद्धे र्निरुक्तानुमितिसामान्यविरोधित्वाभावादेव नाति- व्याप्तिशंकेति वस्तुतस्तु तद्धर्मितावच्छेदकक बुद्धौ तत्सामानाधिकरण्यमात्रेण ग्राह्याभावावगाहिबुद्धे रप्रतिबंधकतया ग्राह्याभा- ४१

(१) टिप्पणी—अथात्र किंचिद्विवेचयामः यद्रूपावच्छिन्नविषयक निश्चयसामान्ये स्वभिन्न स्वसमानकालीन हेतुमत्तानिश्चयधर्मितावच्छेदकताव्यापक धर्मितावच्छेदकताकानुमितित्व व्यापकप्रतिबध्यतानिरूपित प्रतिबंधकत्वमवश्यं वक्तव्यं । तथाच घटोवन्हिमान्हदो वन्हिमांश्चेति समूहालंबनानुमितित्वव्यापक प्रतिबध्यतानिरूपित प्रतिबंधकत्वं तादृशबाध विषयक निश्चयेऽक्षतत्वात् बाधेऽतिव्याप्तिवारणाय स्वसमानकालीन हेतुमत्तानिश्चये स्वभिन्नत्वमवश्यंदेयं । एवंच स्वसमानकालीनहेतुमत्तानिश्चये स्वभिन्नत्वोपादानेजलवद्धृदकालीन वन्हिव्यापकीभूताभाव प्रतियोगिजलत्वावच्छिन्न रूपासाधारणेऽव्याप्तिरित्यसंभवः एवंच सधर्मितावच्छेदकक हेतुमत्तानिश्चयेपि स्वभिन्नत्वंदेयं अन्यथान्हदो जलवद्धृदकालीन वन्हिमान्जलादित्यत्र जलवद्धृदकालीन वन्हिव्यापकीभूताभाव प्रतियोगि जलत्वांशे तत्तद्धर्मितावच्छेदकव्यापकतावगाहित्वमेव तंत्रं तथाच ग्राह्याभावे तद्धर्मव्यापकतानिश्चयस्य तत्तद्धर्मावच्छिन्नांशे ग्राह्याभावप्रकारकस्यापि तत्तद्धर्मधर्मितावच्छेदकक ग्रहप्रतिबंधकत्वं तत्तद्धर्मव्यापकताच तत्तद्धर्मसमानाधिकरणाभावाप्रतियोगित्वंत ज्ज्ञानस्य प्रतिबंधकत्वे वृत्तिमदत्यंताभावाप्रतियोगित्वज्ञानमपि तथासामान्यघटितविशेषाभावग्रहस्य यत्रप्रतिबंधकत्वं तत्र तत्सामान्याभावस्यापि तथात्वानुभवात् । सर्वमाकाशाभाववदितिबुद्ध्याकाशाभावे वृत्तिमदत्यंताभावाप्रतियोगित्वं विषयः सएवबाधस्तादृशानुमितिसामान्यविरोधीति । (१) मलस्थेन तनेत्यनेन संशयप्रयोजकयो र्विभाजकीभूतसपक्षवृत्तित्वविपक्षव्यावृत्तत्व घटितसाधारणत्वावच्छिन्नविषयकनिश्चयस्य स्वभिन्नहेतुमत्तानिश्चय कालीनस्यापि सधर्मितावच्छेदकक हेतुमत्तानिश्चयकालीना साधारण विषयक निश्चयसामान्यां तर्गततया तत् कालीनस्वभिन्नहेतुमत्तानिश्चयस्या प्रसिद्ध्यातत्राव्याप्तेर्दुष्परिहारा पत्तेः ननु वन्ह्यभाववान् जलवान् इतिनिश्चयकालीन वन्हिव्यापकीभूताभाव प्रतियोगि-जलत्वावच्छिन्न विषयकनिश्चयस्यापि तादृश सामान्यांतर्गतत्वात् समानकालीनहेतुमत्ता निश्चयधर्मिता वच्छेदकीभूत वन्ह्यभावा वच्छिन्नधर्मिक वन्ह्यनुमितेरेवा प्रसिद्ध्याकालीनांतोपादानेपि असंभवो दुर्निवार एव नच साध्यवत्तानुमिति धर्मितावच्छेदको य स्तद्धर्मधर्मितावच्छेदकक हेतुमत्तानिश्चयकालीनत्वं ... [illegible]विशिष्टविषयकनिश्चये दातव्यं तथाच वन्ह्यभावस्य वन्ह्यनुमिति धर्मितावच्छेदकत्वाभावात् वन्ह्यभावधर्मितावच्छेदकक जलत्वावच्छिन्न प्रकारक

सधर्म्मितावच्छेदकक हेतुमत्तानिश्चयपदेन धर्तुमशक्यत्वान्न दोषः नच ह्रदो जलवन्मीनवत्कालीन वन्हिमान्जलादित्यत्र जलवन्मीनवत्कालीन वन्हिव्यापकीभूताभावप्रतियोगिजले अव्याप्तिः तादृशविशिष्टविषयकनिश्चयस्य किंचिद्धर्म्मावच्छिन्ना वच्छेदकताक विशेष्यताक हेतुमत्तानिश्चयकालीनान्यत्व विरहादितिवाच्यम् यादृशविशिष्ट विषयकत्वाव्यापकीभूताया किंचिद्धर्म्मावच्छिन्नावच्छेदकताक विशेष्यताक हेतुप्रकारता तादृशप्रकारताशालि निश्चयकालीनान्यत्व स्य यादृशविशिष्टविषयकनिश्चये निवेशनीयत्वात् । तथाच जलवन्मीनवत्कालीनवन्हिव्यापकीभूताभाव प्रतियोगिजलत्वावच्छिन्नविषयकत्वा व्यापिका न तादृशा साधारण्यविषयकज्ञानीय जलवन्मीनवद्विषयता किंतु अन्यदीय विषयतैव इतितादृश विषयताशालि ज्ञानसमानकालीनान्यत्वं तादृशासाधारण्यविषयकज्ञानेअक्षत

रण्यासाधारण्ययोः परामर्शेऽसंगतिः सपक्षवृत्तितावंशज्ञानस्यानुमित्यविरोधितया तद्घटितस्य हेत्वाभासताविरहादिति तस्यानुमितिविरोधितया प्रक्रांतविपक्षवृत्तित्वाद्यंश मात्र परामर्षकता माह । तेनेति । विपक्षवृत्तित्वत्वादिना अप्रक्रांतत्वात् प्रक्रांततालाभाया नुमितिविरोधिनेत्युक्तं । अनुमितिविरोधित्वावच्छिन्नस्या नुमित्यविरोधित्वा त्तत्पदस्य विपक्षवृत्तित्वत्वाद्यवच्छिन्नपरत्व मावश्यकमिति तल्लाभाय विपक्षवृत्तित्वादिनेति । विपक्षवृत्तित्वत्वाद्यवच्छिन्नेनेत्यर्थः तेनैवेति । एवकारस्य विभाजकधर्मस्यानुमितिप्रतिबंधकहेतुज्ञानप्रकारत्वव्यवच्छेदपरत्वे ऽसंगतिः तादृशज्ञानप्रकारीभूत विपक्षवृत्तित्वादेरेवानुगतधर्मप्रकारेण विभाज-

मेव नच ह्रदत्वसामानाधिकरण्येन जलवत्तानिश्चयकालीन वन्हिव्यापकीभूताभावप्रतियोगिजलनिश्चयस्य ह्रदत्वसामानाधिकरण्येन वन्ह्यनुमितिं प्रत्यप्रतिबंधकत्वात् सधर्मितावच्छेदकक हेतुमत्तानिश्चयकालीनयादृशविशिष्टविषयक निश्चयसामान्यान्तर्गत ह्रदत्वसामानाधिकरण्येन जलवत्तानिश्चयकालीनासाधारण्यविषयकनिश्चयस्य स्वसमानकालीनहेतुमत्तानिश्चयधर्मितावच्छेदकावच्छिन्न धर्मिकवन्ह्यनुमिति सामान्यांतर्गत ह्रदत्वसामानाधिकरण्येन वन्ह्यनुमित्यविरोधित्वात् असाधारण्येऽव्याप्तिर्दुर्निवारै वेति वाच्यम् सधर्मितावच्छेदकक हेतुमत्तानिश्चयपदेन किंचिद्धर्म्मविशिष्टाया हेतुतावच्छेदकावच्छिन्नप्रकारता तादृशप्रकारताशालिनिश्चयस्य विवक्षितत्वात् किंचिद्धर्मवैशिष्ट्यंच स्वावच्छिन्नविशेष्यतानिरूपितत्व स्वव्यापकहेतु प्रतियोगिकहेतुतावच्छेदकसंबंधावच्छिन्नत्व एतदुभयसंबंधेन ४२

तथाच ह्रदत्वसामानाधिकरण्येन जलवत्तानिश्चयीयजलत्वावच्छिन्नप्रकारतायो ह्रदत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितत्व संबंधेन सत्वेपि स्वव्यापकहेतुप्रतियो-
गिकहेतुतावच्छेदक संबंधावच्छिन्नत्व संबंधेनासत्वात् ननिरुक्तोभयसंबंधेन किंचिद्धर्मविशिष्टत्व मितिह्रदत्वसामानाधिकरण्येन जलवत्तानिश्चयसमानकालीना सा-
धारण्यविषयक निश्चयमादायनदोषः अत्र द्रव्यत्वादिधर्मितावच्छेदकक ह्रदत्वव्यापक जलप्रतियोगिकसंयोगसंबंधेन जलप्रकारकनिश्चयस्य प्रामाणिकत्वे ताद-
कत्वात् एवं प्रत्येकमेवेत्येवकारस्यापि विभाजकधर्मस्य हेत्वाभासताव्यवच्छेदपरत्वे नोपपद्यते इति अनुमितिविरोधित्वादिरूपा
नुगमकविभाजकतावच्छेदकधर्मस्य प्रतिबंधकज्ञान प्रकारतावच्छेदकत्व हेत्वाभासपदप्रतिपाद्यतावच्छेदकत्वव्यवच्छेदपरतया
एवकारद्वयं व्याचष्टे एवकारेणेति प्रथमैवकारेणेत्यर्थः व्यवच्छिद्यप्रतिबंधकज्ञानप्रकारतावच्छेदकत्व व्यवच्छेदपरतया प्रतिपाद्य-
हेत्वाभासस्येति पूरणीयम् एवंच प्रत्येकमेवेति मूलस्य विपक्षवृत्तित्वादिप्रत्येकमात्रवृत्तिरूपावच्छिन्नस्यैवेत्यर्थः तेना साधारणस्येत्या
दिमूलस्या नुमितिविरोधिताघटितलक्षणं परित्यज्य लक्षणांतरकरणेना साधारणस्य साध्यतदभावो पस्थापकतया संशायकतया
दूषणं तत्पक्षे नाव्याप्तिरिति सार्थकत्वे ऽसंगतिः। संभवत्संशयप्रयोजक साध्यतदभावसहचारिताभाव प्रतियोगित्वरूपा साधा-
रण्यस्य सद्धेतुसाधारणता प्रयुक्तदोषस्यासंभवदोषानेवा नुमितिविरोधिताघटितलक्षणस्या वतारितत्वात् तेनेत्यस्य संशायकताघ-
टितलक्षणपरित्यागपूर्वकापरलक्षणद्वयकरणस्या साधारणसंग्रहप्रयोजकतार्थकत्वं। साध्यतदभावोपस्थापकतयेत्यस्य च सत्प्र-
तिपक्षोपस्थापकतयेत्यर्थकत्वमपिनसाधुः असाधारण्यसत्प्रतिपक्षोपस्थापकतामते साध्यव्यापकीभूताभावप्रतियोगित्वस्यैवा सा-
शनिश्चयकालीना साधारण्यविषयकनिश्चयस्य स्वसमानकालीन हेतुमत्तानिश्चयधर्मितावच्छेदकक द्रव्यत्वावच्छिन्नधर्मिक वन्ह्यनुमिति सामान्याविरोधित्वाद सा-
धारण्ये अव्याप्तिरतः स्वावच्छिन्नविशेष्यतानिरूपितत्वस्य संबंधघटकतयाप्रवेशः ननुसधर्मितावच्छेदकक हेतुमत्तानिश्चयात्मकयादृशविशिष्टविषयकनिश्चयसामान्यं
स्वीयहेतुतावच्छेदकावच्छिन्न प्रकारतानिरूपित विशेष्यतावच्छेदकावच्छिन्नविशेष्यक साध्यानुमिति सामान्यविरोधि इत्येवास्तु व्यर्थं कालीनत्वद्वयोपादानमिति





यादृशविशिष्ट विषयित्वा व्यापकीभूतविशयिता शून्यत्वमवश्यं निवेशनीयं अन्यथा आलिमान्वह्निव्यापकी भूताभाव प्रतियोगिजालिमान् वा धूमाभाववद्वृत्तिरिति साधारणा साधारणविषयकज्ञानयो रनुमित्यप्रतिबंधकत्वा दसंभवापत्तेः एवं चा साधारण्यविषयित्वा व्यापकीभूत विषयिता शून्यत्वस्य सधर्म्मितावच्छेदकक हेतुप्रकारका साधारण्यविषयक निश्चये विरहादसंभवापत्तेः सधर्म्मिता वच्छेदकक हेतुप्रकारत्वविशिष्ट यादृशविशिष्ट विषयकत्वा व्यापकीभूतविषयता शून्यत्वं निवेश्य सधर्म्मितावच्छेदकक हेतुमत्ता निश्चयात्मक यादृशविशिष्टविषयक निश्चये ऽव्यापकीभूत विषयता शून्यत्व संपादनंतु न समीचीनं

धारण्यतया तस्यव्याप्तिग्रहाविरोधितया विरुद्धादिसंकीर्णासाधारण्यानुरोधेन व्याप्तिग्रहद्वयविरोधितापरतयाव्याख्येयस्या व्यवहितलक्षणस्य तत्राव्याप्तेरावश्यकत्वा दत स्तत्पदेन मध्यमलक्षणमात्रपरतया व्याचष्टे। तेनेति। असाधारण्यस्य संशायकतापक्षे प्रथमलक्षणस्यैव साधुता नतु मध्यमस्य संशयप्रयोजकस्य निश्चितसाध्यतदभाववद्व्यावृत्तत्वादे रनुमित्यविरोधित्वा दित्युपष्टंभासंगतिभयेन साध्यतदभावोपस्थापकतये त्यस्य संशायकतयेत्यर्थं परित्यज्यार्थांतरमाह सत्प्रतिपक्षोत्थापकतयेति इतरलक्षणयो स्तन्मते ऽसाधारणाव्याप्तिसत्वएवोपष्टंभसंगते रुपष्टंभकतां स्फुटीकर्तुं तत्पूरयति इतरथापुनरिति इतरलक्षणयोस्त्वित्यर्थः अव्याप्तिरेवेति सत्प्रतिपक्षोपस्थापकतयादूषणत्वपक्ष इत्यनुषज्यते यथाश्रुतं साध्याभावज्ञापकत्वं न बाधसाधारण मतस्तदर्थं

सधर्मितावच्छेदकक हेतुमत्ताविषयत्व विशिष्टयादृशविशिष्ट विषयिताया घटोजलवानितिनिश्चयात्मका साधारण्यविषयकज्ञाने ह्रदो जलवानिति निश्चयात्मका साधारण्यविषयकज्ञानेपि प्रत्येकंसत्वात् अत्रच प्रत्येकं जलवद्ध्रद विषयताया जलवद्घटविषयतायाश्चा भावसत्वात् चालनी न्यायेन सर्वत्र हेतुमद्धर्मितावच्छेदकावच्छिन्न विषयताविशिष्ट तादृशविशिष्ट विषयत्वाव्यापिका सति तच्छून्यत्वस्य कुत्रापि सधर्मितावच्छेदकक हेतमत्तानिश्चयात्मक यादृशविशिष्ट विषयकनिश्चय ऽसत्वादसंभवापत्तेः। हेतुमत्तानिश्चयस्य धर्मितावच्छेदकं यद्यत् प्रत्येकं तत्तद्धर्मावच्छिन्नविशेष्यतानिरूपित हेतुप्रकारित्वा व्यापिकासति यादृशविशिष्ट विषयित्वा ४३

व्यापिका या विषयतातच्छून्यत्वस्य ज्ञाने विशेषणे चातीवगौरवमिति विभावनीयं ॥

व्याचष्टे साध्याभावेति व्यभिचारादिव्यावृत्तस्य कारणीभूताभावप्रतियोगित्वरूप प्रतिबंधकताघटितस्य विरोधित्वस्य विरोधिपदार्थतालाभाय साक्षादिति ॥ सव्यभिचारसामान्यनिरुक्तिः संपूर्णा ॥ श्रीमन् महामहोपाध्याय श्रीगदाधर तर्कालंकार भट्टाचार्य्य विरचितेयम् ॥ ❀ ❀ ❀ ❀ ❀ ❀ ❀ ❀ ❀ ❀ ❀ ❀

इति यथामति कृत दूषणो द्भावना भाव संपादितेयं भवितेति समीहे ॥ गुण दोषौ बुधो गृह्णन्निन्दुक्ष्वेडा विवेश्वर. ॥ शिरसाश्लाघते पूर्वं परं कंठे नियच्छति ॥ १ ॥ इत्यादि वाक्यमेवावलम्बा महे इति प्रार्थना ।

**महामहोपाध्याय झोपाह्व श्रीसंगमलाल शर्मणः शिष्य गंगाधर शर्म कृता.**

॥ संवत् १९४४ फाल्गुन शुक्ल पौर्णिमा चंद्रवासरे मुद्रण समाप्ति मगमत् ॥



सूचना—इसमें जो शिरोमणि अधिक छापा गया है उसका टीका भी अब छप रही है. यह पुस्तक श्रीसरस्वती अखाड़ा विद्या विभाग पुस्तक कार्यालयमें मिलेगा. श्रीनाथद्वारा

